# नित्य नियम पाठ विधि



**श्री मस्तबब आश्रम**
पटोली मंगोत्रियां, जम्मू ।
पिन - 180007
फोन : 47933

मुद्रक :
**ज्योती प्रिन्टर्ज़**
पटोली मंगोत्रियां, जम्मू-180007
फोन : 42617

## शान्तिपाठ

ॐ शं नो मित्रः। शं वरुणः। शं नोभवत्वर्यमा शं नो इन्द्रो बृहस्पतिः। शं नो विष्णुरुरुक्रमः नमो ब्रह्मणे। नमस्ते वायो। त्वमेव प्रत्यक्षं ब्रह्मासि। त्वामेव प्रत्यक्षं ब्रह्म वदिष्यामि। ऋतं वदिष्यामि। सत्यं वदिष्यामि।

तन्मामवतु, तद्वक्तारमवतु, अवतु माम्। अवतु वक्तारम्।

ॐ शान्तिः शान्तिः शान्तिः।

( ऋग्वेद [illegible]

# विषय सूची

| म सं॰ | विषय ( पाठ/भजन ) | |
|---|---|---|
| 1 | नित्य ... पाठ आरम्भ | ( शुक्लाम्बरधरं ) |
| 2 | गणेश स्तुति | ( हेमजा सुतं ) |
| 3 | गुरु स्तुति | ( अज्ञान घटे ) |
| 4 | विष्णु स्तुति | ( जय नारायण ) |
| 5 | गौरी स्तुति | ( लीलारब्ध ) |
| 6 | शंकर स्तुति | ( आधीनामगधं दिव्यं ) |
| 7 | शिव महिम्ना स्तोत्रम् | ( महिम्न: पारंते ) |
| 8 | शिव स्तुति | ( नागेन्द्रहराय त्रिलोचनाय |
| 9 | भैरव स्तुति | ( व्याप्तचराचर ) |
| 10 | शंकर स्तुति | ( अतिभीषण ) |
| 11 | प... ( कुछ श्लोक ) | ( व्याकुल... ) |
| 12 | गुरुस्तुति | ( शिव शंकर भव भय हर ) |
| 13 | भवानीनामसहस्र | ( ॐअरि शंख-कृपाण-खेट बा |
| 14 | इन्द्राक्षी स्तोत्रम् | ( इन्द्राक्षी नाम सा देवी ) |
| 15 | ...रिका स्तुति | ( बीजै: सप्तभिरूज्ज्वला ) |
| | ... नियम पाठ समाप्तम् | ( कर्पूरगौरं करुणावतारं ) |
| | ... | ( अब सौंप दिया इस जीवन |
| | ...ती गणेश जी की | ( जय गणेश जय गणेश ) |
| | ...जी की आरती | ( ॐ जय शिव ओंकारा ) |
| | ...न जय संतोषी मां | ( मैं तो आरती उतारूं रे ) |
| | ... स्मृणीय श्लोक | |


प्रथम संस्करण — 1000 प्रतियां जनवरी, 1993

दूसरा संस्करण — 1000 प्रतियां नवम्बर, 1993

तीसरा संस्करण— 1000 प्रतियां जुलाई, 1995

मूल्य : 20/- रुपये



## ॐ श्री गणेशाय नमः

शुक्लाम्बरधरं विष्णुं शशिवर्णं चतुर्भुजम्
प्रसन्नवदनं ध्याये सर्वविघ्नोपशान्तये ।
अभिप्रेतार्थसि-द्ध्यर्थं पूजितो यः सुरैरपि
सर्वविघ्नच्छिदे तस्मै गणाधिपतये नमः ॥

बिभ्रद्दक्षिण हस्त-पद्म युगले दन्ताक्षसूत्रे शुभे
वामे मोदक पूर्णपात्र-परशु नागोपवीती त्रिदृक् ।
श्रीमान्-सिंहयुगासनः श्रुतियुगे शङ्खौ वहन्मौलिमान् ।
दिश्यात्-ईश्वरपुत्र ईश भगवान लम्बोदर शर्म नः ॥

नमो नमो गजेन्द्राय एकदन्त धराय च
नमः ईश्वर पुत्राय श्री गणेशाय नमो नमः

गुरुर्ब्रह्मा गुरुर्विष्णु गुरुः साक्षात्महेश्वरः
गुरुरेव जगत्सर्वं तस्मै श्री गुरुवे नमः ॥

अखण्डमण्डलाकारं व्याप्तं येन चराचरम्
तत्पदं दर्शितं येन तस्मै श्रीगुरुवे नमः

आपदामपहर्तारं दातारं सर्वसंपदाम्
लोकाभिरामं श्री रामं भूयो भूयो नमाम्यहं ॥

ध्यानमूलं गुरोर्मूर्तिः पूजामूलं गुरो पदम्
शास्त्रमूलं गुरोर्वाक्यं मोक्षमूलं गुरोःकृपा ॥

नमामि सत्गुरुं शान्तं प्रत्यक्षं शिवरूपिणं
शिरसा योगपीठस्थं धर्मकामार्थ सिद्धये ॥

ब्रह्मानन्दं परमसुखदं केवलं ज्ञानमूर्तिं
द्वन्द्वातीतं गगनसदृशं तत्त्वमस्यादिलक्ष्यम् ।
एकं नित्यं विमलमचलं सर्वधीसाक्षिभूतं
भावातीतं त्रिगुणरहितं सद्‌गुरूं तं नमामि ॥

शान्ताकारं भुजगशयनं पद्मनाभं सुरेशं
विश्वाधारं ग[illegible]सदृशं मेगवर्णं शुभाङ्गम् ।
लक्ष्मीकान्तं कमलनयनं योगिभिर्ध्यानगम्यं
वन्दे विष्णु भवभयहरं सर्वलोकैकनाथम् ॥

यं ब्रह्मावरुणेन्द्र [illegible]मरुतः स्तुन्वन्ति दिव्यैः स्तवै
र्वेदैः साङ्गपदक्रमोपनिषदैगायन्ति यं सापगाः
ध्यानावस्थिततग्दतेन मनसा पश्यन्ति यं योगि[illegible]
यस्यान्तं न बिदुः सुरसुरगणा देवाय तस्मै नमः

वन्दे देवमुमापतिं सुरगुरुं वन्दे जगत्कारणं
वन्दे पन्नगभूषणं मृगधरं वन्दे पशूनां पतिम् ।
वन्दे सूर्यशशाङ्कवह्निनयनं वन्दे मुकुन्दप्रि[illegible]
वन्दे भक्तजनाश्रयं च वरदं वन्दे शिवं शङ्करम्

शान्तं पद्मासनस्थं शशिधरमुकुटं पञ्चवक्त्रं त्रिनेत्रं
शूलं वज्रं च खड्गं परशुमभयदं दक्षिणाङ्गे वहन्तम्
नागं पाशं च घन्टा डमरुकसहितं सांकुशं वामभागे
नानालङ्कारदीप्तं स्फटिकमणिनिभं पार्वतीशं नमामि ॥



## गणेश स्तुति

हेमजा सुतं भजे गणेशं ईशनन्दनं ।
एकदन्त वक्रतुण्ड नागयज्ञ सूत्रकम् ।
रक्त गात्र धूम्रनेत्र शुक्ल वस्त्र मण्डितं ।
कल्पवृक्ष भक्त रक्ष नमोस्तुते गजाननम् ।१।

पाशपाणि चक्रपाणि मूषकादि रोहिणं ।
अग्निकोटि सूर्यज्योति वज्रकोटि निर्मलम् ।
चित्रभाल भक्तिजाल भालचन्द्र शोभितं ।२।
कल्पवृक्ष ........

भूतभव्य हव्य कव्य भृगु भार्गवा र्चितम ।
दिव्यवहि्न कालजाल लोकपाल वन्दितं ।
पूर्णब्रह्म सूर्यवर्ण पुरुषं पुरान्तकं ।३।
कल्पवृक्ष ........

विश्ववीर्य विश्व सूर्य विश्वकर्म निर्मलं ।
विश्वहर्ता विश्वकर्ता यत्र तत्र पूजितम् ।
चतुर्मुखं चतुर्भुजं सेवितुं चतुर्युगं ।४।

कल्पवृक्ष.........

ऋद्धि बुद्धि अष्टसिद्धि नवनिधान दायकम ।
यज्ञकर्म सर्व धर्म सर्व वर्ण अर्चनम् ।
पूतधूम्र दुष्ट मुष्ट दायकं विनायकम् ।५।

कल्पवृक्ष ........

हर्ष रूप वर्ष रूप पुरुष रूप वन्दितं ।
शोर्प कर्ण रक्त वर्ण रक्त चंदन लेपितम् ।
योग इष्ट योग सृष्ट योग दृष्टि दायकं ।६।

कल्पवृक्ष... .....



# गुरुस्तुति

## स्व0 श्री योगीराज नन्दलाल जी के पाद्य कमलों में स्व0 श्री नीलकन्ठ जी की तुच्छ भेंट



अज्ञान घटे सिर्यि प्रकाश छुक आसवोनुय
ज्ञान प्रकाश छुक आसवोनुय
ॐ श्री सतगुरु क्षण क्षण छुम आसर चोनुय
ॐ श्रीसतगुरु .......

च़य छुक ब्रह्मा च़य हा विष्णु-महेश्वरं
च़य विश्वमय छुक अज़र अमर अक्षर थ्यरय
बर त्रण गुणन पादि प्रणाम भविनय म्योनुय
ॐ श्री सतगुरु क्षण क्षण छुम आसर चोनुय
ॐ श्रीसतगुरु .......

चान्यन पादन हंदि गरदे हुन्दुय अंजन
युस लागि न्यतरन देव द्रष्टि तमिस छि बनन्
यथ न कांह वुछान तथ सदा च़य छुख वुछवोनुय
ॐ श्रीसतगुरु .......

दया सागर ! कर म्य दया दीनस क्षीनस
सिद्धी दितम मदमोचन म्य बुद्धिहीनस
ब' अद कस वन ऑरत्य नाद छुक बोज़वोनुय
ॐ श्रीसतगुरु .......

शरण ब आसय च़ृय प्योसय परण पादन
वरुम म्य दासस थावतम कन ऑरत्यन नादन
तरन भवसर च्योन प्रभाव इमव ज़ोनुय

ॐ श्रीसत्गुरु ........

छुक सिद्ध योगी ब छुस रूगी दिम म्य दवा
औषध चान्यन पादन हंज़ गरद छ़ ना
उत्तम चूरण सर्व रूगन छु कासवोनुय

ॐ श्रीसत्गुरु .......

घटे घाशर ! चानि दयायि म्य रूग हटे
मटे छुसय तार भवसर अके वोटे
लटे अके मोख म्य हावतम प्रज़लवोनुय

ॐ श्रीसत्गुरु..........

सन्ताप अगन पाप सूत्यन गोमुत प्रबल
शेरस प्यठ थाव कर कमल पनन्य शीतल
संताप च़ल्यम् पाप गल्यम नोव तय प्रोनुय

ॐ श्रीसत्गुरु

सेतार मनुक तार चॉरिथ सदा दिवान
हद यथ ना कुने बोद्ध म्याञ सुय स्तुता ग्यवान
वृच़ म्यानि नच़ान कनव बोज़तम लोलवनवोनुय

ॐ श्रीसत्गुरु...

करतम स दया वरतम तल च़रनार बिंदन
छुक बोध-द्रष्टि च़य दिवान अन्यन त मंन्यन
अन्दान छुय न्याय चानि दयायि कर पाय म्योनुय
ॐ श्रीसत्गुरु ......

चिंत्तामनि ! सोन च़ बनावान छुक त्रामस
फोतस मोखतय पोखत बनावान छुक खामस
च़य घटि हुन्द गाश स्वामी नन्द लाल छुय नाव चोनुय
ॐ श्रीसत्गुरु .......

ई ब न ओसुस तीय ओसुस ज़ानान ब पान
दयायि चानि यीय ब छुस तीय म्य ज़ोनुम टकान
रोवमुत लोबुम पजि़ लॅबित नजि़ रावरोनुय
ॐ श्रीसत्गुरु ........

इमन इमन गव जि़ यिमन च़य सूत्य लयस
दयस सूत्यन गयि जि़ मीलिथ वाति पयस
भयस ज़य गोम दोन म्य रूदुम कुनुय भासवोनुय
ॐ श्रीसत्गुरु ........

भवसर तरनुक 'नीलकंठस' बनितन उपाय
स्वामी नन्दलाल जी तय स्वामी लालजी रूज़यतन सहाय

छीय तंग आमत्य अंज़ल हय्थ छिय मंगवोनिय
ॐ श्रीसत्गुरु .....

# विष्णु स्तुति

ॐ जय नारायण जय पुरुषोत्तम जय वामन कंसारे।
उद्धर मामऽसुरेशविनाशिन् पतितोऽहं संसारे॥
घोरं हर मम नरकरिपो केशव कल्मषभारं।
मामऽनुकम्पय दीनमऽनाथं कुरु भवसागरपारम॥

घोर०........

जय जय देव जया-सुरसूदन जय केशव जय विष्णो।
जय लक्ष्मीमुख कमलमधुव्रत जय दशकन्धरजिष्णो॥

घोरं०........

यद्यपि सकलमऽहं कलयामि हरे नहि किमऽपि स सत्वं
तदऽपि न मुञ्चति मामिदमऽच्युत पुत्रकलत्रममत्त्वम्

घोरं०........

पुनरऽपि जननं पुनरऽपि मरणं पुनरऽपि गर्भनिवासं।
सोढुम ऽलंपुनरऽस्मिन्माधव मामुद्धर निजदासम्॥

घोरं०....

त्वं जननी जनकः प्रभुरऽच्युत त्वं सुहृतकुलमित्रम्
त्वं शरणं शरणगतवत्सल त्वं भवजलधिवहित्रम्॥

घोरं०.....

जनकसुतापति चरणपरायण शंकरमुनिवर गीतं।
धारय मनसि कृष्ण पुरुषोत्तम वारय संसृतिभीति

घोरं०......

## गौरी स्तुतिः

लीलारब्ध-स्थापित-लुप्तखिल लोकां
लोकातीतै-र्योगिभिरन्तर्हृदि मृग्याम् ।
बालादित्य-श्रेणि-समान-द्युति पुंजां
गौरीमम्बामम्बुरुहाक्षीमहमीडे ।

आशा-पाश-क्लेश-विनाशं विदधानां
पादाम्बोज-ध्यान-पराणां पुरुषाणाम् ।
ईशींईशार्धाङ्गहरां तां तनुमध्याम्
गौरीम० ........

प्रत्याहार-ध्यान-समाधि-स्थिति-भाजां
नित्यं चित्ते निर्वृत्ति-काष्ठां कलयन्तीम् ।
सत्य-ज्ञानानन्दमयीं तां अभिवन्ध्याम् ।
गौरीम० ........

चन्द्रापीडानन्दित-मन्द-स्मित-वक्त्रां
चन्द्रापीडालङ्कृत लोलाकभाराम् ।
इन्द्रो पेन्द्राभ्यर्चित-पादाम्भुज-युग्माम् ।
गौरीम० ......

नानाकारैः शक्तिकदम्बैर्भुवनानि
व्याप्य स्वैरं क्रीडति याऽसौ स्वंयमेव ।
कल्याणीं तां कल्पलतामानति-भाजाम् ।
गौरीम० ........

मूलाधारातउत्त्थितवन्तीं विधि-रन्ध्रं
सौरं चान्द्रं धाम विहाय ज्वलिताङ्गीम्।
ध्येयां सूक्ष्मां सूक्ष्मतनुं तां तडित्-आभाम्
गौरीम० ........

आदि क्षान्ताम् अक्षर-मूर्त्या विलसन्तीं
भूते भूते भूत-कदम्बं प्रसवित्रीम्।
शब्द-ब्रह्मानन्दमयीं तां प्रणवाख्याम्।
गौरीम० ......

यस्या कुक्षौ लीनम-अखण्डं जगतअण्डं
भूयो भूय: प्रादुरअभूत-अक्षतम्-एव।
भर्तृ साधं तां स्फटिकाद्रौ विहरन्तीम्।
गौरीम० ......

यस्याम् एतत्प्रोतिम् अशेषं मणिमाला
सूत्रे यद्धत्क्वापि चरं क्वाप्यचरं च।
तां अध्यात्मज्ञान-पदव्या-गमनीयाम्।
गौरीम० ......

नित्य: सत्यो निष्कल एको जगत्ईश:
साक्षी यस्या: सर्ग-विधौ संहरणे च।
विश्वत्राण क्रीडनशीलां शिव-पत्नीम्।
गौरीम० ...

प्रात: काले भावविशुद्ध: प्रणिदानात्
भक्त्या नित्यं जलपति गौरी-दशकं य:।
वाचां सिद्धिं सम्पदमुच्चै: शिव-भक्तिं
तस्यावश्यं पर्वत-पुत्री विदधाति।

इति गौरीस्तुति:

**आधीनाम-अगदं दिव्यं व्याधीनां मूलकृन्तनम् ।**
**उपद्रवाणां दलनं महादेवम-उपास्महे ।**

आधियन हुन्द युस औषधि छु आसवुन, व्याधियन हुन्द युस मूल गालान
कठिञण उपद्रवन द्रोत युस छु वायान्, तस महादेवस कर् भ् पूजा ।

**अहं पापी पाप क्षपण निपुणः शंकर भवान्**
**अहं भीतो भीता भय वितरणे ते व्यसनिता**
**अहं दीनो दीनोद्धरण विधि सज्जस्तमितरत्**
**न जानेहं वक्तुँ कुरु सकल शौचे मयि कृपाम्**

ही शंकर छुस भ् पापी आसवुन, च़्_य पापन छुख नाश करान ।
खूचमुत छुस भ् व्यथि खोफ छुम म्य बासान, च़्_य अभय दिवान च़्_य भय कासान ।

छुस भ् दीन व्यथि आ'रत्यन हुन्द आ'रुत, आ'रत्यन भवसर च़्_य तारान ।
कर दया म्य बुद्धिहीनस प्यठ च़्_ पानय, अमिखो़त् ज्याद् छुस न केंह भ् जानान ।

**जनस्त्वद्पादाब्ज् श्रवण मनन ध्याननिपुणाः**
**स्वयं ते विस्तीर्णा न खलु करुणा तेषु करणा ।**
**भवे लीने दीने मयि मननहीने न करुणा**
**कथं नाथ ख्यातस्त्वमसि करुणा सागर इति ।**

ही शंकर चानि चरण कमलुक युस, करि श्रवन मनन व्यथि निदिध्यासन
तरि पानै सु भवसर् हाजत तस, चाञन कटाक्षण हुन्द कति रोज़न ।
संसारस मंज़ फटिमतिस म्य दुखियस, विचा़र् रु'स्तिस त् म्य अनाथस
यलि करख न दया म्य मूढ़ भाव् स'स्तिस, नाव चोन दयासागर वन् ब् कस ।
शंकर तारान छु भवसागर ।।
कति सपदि नाव चोन मशहूर ज़गतस,

# शिव महिम्नस्तोत्रम्

## पुष्पदन्त उवाच

ॐ महिम्नः पारन्ते परमऽविदुषो यद्यसदृशी-
स्तुतिब्रह्मादीनामपि तदवसन्नास्त्वयि गिरः।
अथाऽवाच्यः सर्वः स्वमतिपरिणामावधि गृणन
ममाप्येष स्तोत्रे हर निरपवादः परिकरः।१।

अतीतः पन्थानं तव च महिमा वाङ्मनसयोर-
तद्व्यावृत्या यं चकितमभिधत्ते श्रुतिरपि।
स कस्य स्तोतव्यः कतिविधगुणः कस्य विषयः
पदे त्वर्वाचीने पतति न मनः कस्य न वचः।२।

मधुस्फीता वाचः परमममृतं निर्मितवत-
स्तव ब्रह्मन्किं वागऽपि सुरगुरोर्विस्मयपदम्।
मम त्वेतां वाणीं गुणकथनपुण्येन भवतः
पुनामीत्यर्थेऽस्मिन्पुरमथन ! बुद्धिर्व्यवसिता।३।

तवैश्र्वर्यं यत्तज्जगदुदयरक्षाप्रलयकृत्
त्रयीवस्तु व्यस्तं तिसृषु गुणभिन्नासु तनुषु।
अभव्यानामऽस्मिन्वरद रमणीयामरमणीम्
विहन्तुँ व्याक्रोशीं विदधत इहैके जडधियः।४।

किमीहः किंकायः स खलु किमुपायस्त्रिभुवनम्
किमाधारो धाता सृजति किमुपादानइति च ।
अतर्क्यैश्वर्ये त्वय्यनवसरदुःस्थो हतधियः
कुतर्कोऽयं कांश्चिन्मुखरयति मोहाय जगताम् ।५।

अजन्मानो लोकाः किमऽवयववन्तोऽपि जगताम्
अधिष्ठातारं किं भवविधिरनादृत्य भवति ।
अनीशो वा कुर्याद् भुवनजनने कः परिकरो
यतो मन्दास्त्वां प्रत्यमरवर ! संशेरत इमे ।६।

त्रयी सांख्यं योगः पशुपतिमतं वैष्णवमिति
प्रभिन्ने प्रस्थाने परमिदमदः पथ्यमिति च ।
रुचीनां वैचित्र्यादृजुकुटिलनानापथजुषाम्
नृणामेको गम्यस्त्वमसि पयसामर्णव इव ।७।

महोक्षः खट्वाङ्गं परशुरजिनं भस्म फणिनः
कपालं चेतीयत्तव वरद ! तन्त्रोपकरणम् ।
सुरास्तां तामृद्धिं दधति तु भवद्भ्रूप्रणिहितां
नहि स्वात्मारामं विषयमृगतृष्णा भ्रमयति ।८।

ध्रुवं कश्चित्सर्वं सकलमपरस्त्वध्रुवमिदं
परो ध्रौव्याध्रौव्ये जगति गदति व्यस्तविषये ।
समस्तेऽप्येतस्मिन्पुरमथन ! तैर्विस्मित इव
स्तुवञ्जिह्रेमि त्वां न खलु ननु धृष्टा मुखरता ।९।

तवैश्वर्यं यत्नाद् यदुपरि विरञ्चिर्हरिरधः
परिच्छेत्तुं यातावनलमनलस्कन्दवपुषः।
ततो भक्तिश्रद्धाभरगुरु गृणद्भ्यां गिरिश ! यत्
स्वयं तस्थे ताभ्यां तव किमनुवृत्तिर्नफलति।१०।

अयत्नादासाद्य त्रिभुवनमवैरव्यतिकरम्
दशास्यो अद्बाहूनभृत रणकण्डूपरवशान्।
शिरः पद्म श्रेणी रचित चरणाम्भोरुह बलेः
स्थिरायास्त्वद्भक्तेस्त्रिपुरहर ! विस्फूर्जितमिदम् ११

अमुष्य त्वत्सेवासमधिगतसारं भुजवनम्
बलात्कैलासेऽपि त्वदधिवसतौ विक्रमयतः।
अलभ्या पातालेऽप्यलसचलितांगुष्टशिरसि
प्रतिष्ठात्वय्यासीद्ध्रुवमुपचितो मुह्यति खलः।१२

यदृद्धि सुत्राम्णो वरद ! परमोच्चैरपि सती-
मधश्चक्रे बाणः परिजनविधेयत्रिभुवनः।
न तच्चित्रं तस्मिन् वरिवसितरि त्वच्चरणयोर्न
कस्याप्युन्नत्यै भवति शिरसस्त्वय्यवनतिः।१३

अकाण्डब्रह्माण्डक्षयचकितदेवासुरकृपा-
विधेयस्याऽसीद्यस्त्रिनयन ! विषं संहृतवतः
स कल्माषः कण्टे तव न कुरुते न श्रियमहो
विकारोपि श्लाध्यो भुवनभयभङ्ग व्यसनिन

असिद्धार्था नैव क्वचिदपि सदेवासुरनरे
निवर्तन्ते नित्यं जगति जयिनो यस्य विशिखाः ।
स पश्यन्नीश त्वामितरसुरसाधारणमभूत्
स्मरःस्मर्तव्यात्मा नहि वशिषु पथ्यः परिभवः ।१५।

मही पादाघाताद् व्रजति सहसा संशयपदं
पदं विष्णोर्भ्राम्यद्भुजपरिघरुग्णग्रहगणम्
मुहुर्द्यौर्दौस्थ्यं यात्यनिभृतजटाताडिततटा
जगद्रक्षायै त्वं नटसि ननु वामैव विभुता ।१६।

वियद्व्यापी तारागणगुणितफेनोद्गमरुचिः
प्रवाहो वारां यः पृषतलघुदृष्टः शिरसि ते ।
जगद्द्वीपाकारं जलधिवलयं तेन कृतमि-
त्यनेनैवोन्नेयं धृतमहिम ! दिव्यं तव वपुः ।१७।

रथः क्षोणी यन्ता शतधृतिरगेन्द्रो धनुरथो
रथाङ्गे चन्द्रार्कौ रथचरणपाणिः शर इति ।
दिधक्षोस्ते कोयं त्रिपुरतृणमाडम्बरविधि-
र्विधेयैः क्रीडन्त्यो न खलुपरतन्त्राः प्रभुधियः ।१८।

हरिस्ते साहस्त्रं कमलबलिमाधाय पदयो-
र्यदेकोने तस्मिन्निजमुदहरन्नेत्रकमलम् ।
गतो भक्त्युद्रेकः परिणतिमसौ चक्रवपुषा
त्रनाणांरक्षायै त्रिपुरहर जागर्ति जगताम् ।१९।

क्रतौ सुप्ते जाग्रत्त्वमसि फलयोगे क्रतुमतां
क्व कर्म प्रध्वस्तं फलति पुरुषाराधनमृते ।
अतस्त्वां सम्प्रेक्ष्य क्रतुषु फलदानप्रतिभुवं
श्रुतौ श्रद्धां बद्ध्वा दृढपरिकरः कर्मसु जनः ।२०।

क्रियादक्षो दक्षः क्रतुपतिरधीशस्तनुभृता-
मृषीणामार्त्विज्यं शरणद ! सदस्याः सुरगणाः ।
क्रतुभ्रंशस्त्वत्तः क्रतुफलविधानव्यसनिनो
ध्रुवंकर्तुः श्रद्धाविधुरमभिचाराय हि मखाः ।२१।

प्रजानाथं नाथ ! प्रसभमभिकं स्वां दुहितरं
गतं रोहिद्भूतां रिरमयिषुमृष्यस्य वपुषा ।
धनुष्पाणेर्यातं दिवमपि सपत्राकृतममुं
त्रसन्तंतेऽद्यापि त्यजति न मृगव्याधरभसः ।२२।

अपूर्व लावण्यं विवसनतनोस्ते विमृशतां
मुनीनां दाराणां समजनि सकोऽपव्यतिकरः ।
यतोभग्ने गुह्ये सकृदऽपि सपर्यां बिदधतां
ध्रुवुवंमोक्षो श्लीलं किमपि पुरुषार्थप्रसवितृ ।

स्वलावण्याशंसा धृतधनुषमन्हाय तृणवत्
पुरः प्लुष्टं दृष्ट्वा पुरमथन ! पुष्पायुधमपि
यदि स्त्रैणंदेवी यमनिरतदेहार्धघटना-
दवैतित्वामद्धावत वरद ! मुग्धा युवतयः ।२४

श्मशानेष्वाक्रीडा स्मरहर ! पिशाचाःसहचरा-
श्चिताभस्मालेपः स्त्रगपि नृकरोटी परिकरः ।
अमङ्गल्यं शीलं तव भवतु नामैवमखिलं
तथापि स्मर्तॄणां वरद ! परमं मङ्गलमसि ।२५।

मनः प्रत्यक्चित्ते सविधमविधायात्तमरुतः
प्रहृष्यद्रोमाणः प्रमदसलिलोत्सङ्गितदृशः ।
यदालोक्याह्लादं हृद इव निमज्ज्यामृतमये
दधत्यन्तस्तत्त्वं किमपि यमिनस्तत्किलभवान् ।२६।

त्वमर्कस्त्वं सोमस्त्वमसि पवनस्त्वं हुतवहः
स्त्वमापस्त्वं व्योमत्वमु धरणिरात्मा त्वमितिच
परिच्छिन्नामेवं त्वयि परिणता बिभ्रतु गिरं
न विद्मस्तत्तत्वं वयमिह तु यत्त्वं न भवसि ।२७।

त्रयीं तिस्त्रो वृत्तीस्त्रिभुवनमथो त्रीनपि सुरा-
नकाराद्यैर्वर्णै स्त्रिभिरभिदधत्तीर्णविकृति ।
तुरीयं ते धाम ध्वनिभिरवरुन्धानमणुभिः
समस्तंव्यस्तं त्वां शरणद गृणात्योमितिपदम् ।२८।

भवःशर्वो रुद्रः पशुपतिरथोग्रः सहमहां-
स्तथाभीमेशानाविति यदभिधानाष्टकमिदम् ।
अमुष्मिन्प्रत्येकं प्रविचरति देव श्रुतिरपि
प्रियायास्मै धाम्ने प्रणिहितनमस्योऽस्मि भवते ।२९।

वपुष्प्रादुर्भावादनुमितमिदं जन्मनि पुरा
पुरारे ! नैवाहं क्वचिदपि भवन्तं प्रणतवान् ।
नमन्मुक्तः सम्प्रत्यतनुरहमग्रेप्यनतिमान्
महेश ! क्षन्तव्यं तदिदमपराधद्वयमपि ३०।

नमो नेदिष्ठाय प्रियदव ! दविष्ठाय च नमो
नमः क्षोदिष्ठाय स्मरहर ! महिष्ठाय च नमः ।
नमो वर्षिष्ठाय त्रिनयन ! यविष्ठाय च नमो
नमः सर्वस्मै ते तदिदमिति सर्वाय च नमः ।३१

बहुलरजसे विश्वोत्पत्तौ भवाय नमो नमः
प्रबलतमसे तत्संहारे हराय नमो नमः ।
जनसुखकृते सत्त्वोद्रिक्तौ मृडाय नमो नमः
प्रमहसि पदे निस्त्रैगुण्ये शिवाय नमो नमः ३२।

श्रीपुष्पदन्त मुखपङ्कजनिर्गतेन
स्तोत्रेण किल्विषहरेण हरप्रियेण ।
कण्ठस्थितेन पठितेन समाहितेन
सुप्रीणितो भवति भूतपतिर्महेशः ॥

इत्येषा वाङ्मयी पूजा श्रीमच्छङ्करपादयोः ।
अर्पिता तेन मे देवः प्रीयतां च सदाशिवः ॥



# शिव स्तुति

नागेन्द्रहाराय त्रिलोचनाय भस्माङ्गरागाय महेश्वराय ।
देवाधिदेवाय दिगम्बराय तस्मै नकाराय नमः शिवाय ।।
मातङ्गचरमाम्बर भूषणाय समस्तगीर्वण गर्णाचिताय ।
त्रैलोक्य-नाथाय पुरान्तकाय तस्मै मकाराय नमः शिवाय।।
शिवा-मुखाम्भोज विकासनाय दक्षस्य यज्ञस्य विनाशकाय।
चन्द्रार्क-वैश्वा नरलोचनाय तस्मै शिकाराय नमः शिवाय।।
वशिष्ठ कुम्भोत्-भवगौतमादि-मुनीन्द्र वन्द्याय गिरीश्वराय
श्री नील कण्ठाय वृषध्वजाय तस्मै वकारस्य तमः शिवाय।
यज्ञ स्वरूपाय जटाधराय पिनाक हस्ताय सनातनाय ।
नित्याय शुद्धाय निरञ्जनाय तस्मै यकाराय नमः शिवाय

ॐकारं बिन्दुसंयुक्तं नित्यं ध्यायन्ति योगिनः,
कामद मोक्षदं चैव ओंकारा तं नमाम्यहम ।
न जातो न मृतो यश्च क्षयो यस्य न विद्यते,
नमन्ति देवताः सर्वे नकारं त० ........
महादेवं महावक्रं महाध्यानपरायणम्,
महापापहरं देवं मकारं त० ........

शिवात्परतरो नास्ति शिवशास्त्रेषु निश्चयः,
शमन्ति सर्व पापानि शिकारं त० ........

वाहनं वृषभो यस्य वासुकिः कण्ठ भूषणम्,
वामे शक्तिधरं देवं वकारं त० ........

यत्र तत्र स्थितो देवः सर्व व्यापी महेश्वर,
यो गुरू सर्वदेवानां यकारं त० ........

ॐकारं कर्म चक्रेषु नकारं नाभिमण्डले,
मकारं हृदये देशे शकारं कण्ठ भूषणम्।
वकारं वक्रमध्ये तु यकारं ब्रह्मरन्ध्रगम,
एवं षडक्षरस्तोत्रं यः पठेच्छिव सन्निधौ।
शिवलोकमवाप्नोति शिवेन सह मोदते ॥

●●

श्मशानेष्वाक्रीडा स्मरहर ! पिशाचाःसहचरा-
श्चिताभस्मालेपः स्त्रगपि नृकरोटी परिकरः ।
अमङ्गल्यं शीलं तव भवतु नामैवमखिलं
तथापि स्मर्तृणां वरद ! परमं मङ्गलमसि ।२५।

मनः प्रत्यक्चित्ते सविधमविधायात्तमरुतः
प्रहृष्यद्रोमाणः प्रमदसलिलोत्सङ्गितदृशः ।
यदालोक्याह्लादं हृद इव निमज्ज्यामृतमये
दधत्यन्तस्तत्त्वं किमपि यमिनस्तत्किलभवान् ।२६।

त्वमर्कस्त्वं सोमस्त्वमसि पवनस्त्वं हुतवहः
स्त्वमापस्त्वं व्योमत्वमु धरणिरात्मा त्वमितिच
परिच्छिन्नामेवं त्वयि परिणता बिभ्रतु गिरं
न विद्मस्तत्तत्वं वयमिह तु यत्त्वं न भवसि ।२७।

त्रयीं तिस्त्रो वृत्तीस्त्रिभुवनमथो त्रीनपि सुरा-
नकाराद्यैर्वर्णै स्त्रिभिरभिदधत्तीर्णविकृति ।
तुरीयं ते धाम ध्वनिभिरवरुन्धानमणुभिः
समस्तंव्यस्तं त्वां शरणद गृणात्योमितिपदम् ।२८।

भवःशर्वो रुद्रः पशुपतिरथोग्रः सहमहां-
स्तथाभीमेशानाविति यदभिधानाष्टकमिदम् ।
अमुष्मिन्प्रत्येकं प्रविचरति देव श्रुतिरपि
प्रियायास्मै धाम्ने प्रणिहितनमस्योऽस्मि भवते ।२९।

वपुष्प्रादुर्भावादनुमितमिद जन्मनि पुरा
पुरारे ! नैवाहं क्वचिदपि भवन्तं प्रणतवान् ।
नमन्मुक्तः सम्प्रत्यतनुरहमग्रेप्यनतिमान्
महेश ! क्षन्तव्यं तदिदमपराधद्वयमपि ३०।

नमो नेदिष्ठाय प्रियदव ! दविष्ठाय च नमो
नमः क्षोदिष्ठाय स्मरहर ! महिष्ठाय च नमः ।
नमो वर्षिष्ठाय त्रिनयन ! यविष्ठाय च नमो
नमः सर्वस्मैते तदिदमिति सर्वाय च नमः ।३१

बहुलरजसे विश्वोत्पत्तौ भवाय नमो नमः
प्रबलतमसे तत्संहारे हराय नमो नमः ।
जनसुखकृते सत्त्वोद्रिक्तौ मृडाय नमो नमः
प्रमहसि पदे निस्त्रैगुण्ये शिवाय नमो नमः ३२।

श्रीपुष्पदन्त मुखपङ्कजनिर्गतेन
स्तोत्रेण किल्विषहरेण हरप्रियेण ।
कण्ठस्थितेन पठितेन समाहितेन
सुप्रीणितो भवति भूतपतिर्महेशः ॥

इत्येषा वाङ्मयी पूजा श्रीमच्छङ्करपादयोः ।
अर्पिता तेन मे देवः प्रीयतां च सदाशिः ॥



# शिव स्तुति

नागेन्द्रहाराय त्रिलोचनाय भस्माङ्गरागाय महेश्वराय ।
देवाधिदेवाय दिगम्बराय तस्मै नकाराय नमः शिवाय ॥
मातङ्गचरमाम्बर भूषणाय समस्तगीर्वण गर्णाचिताय ।
त्रैलोक्य-नाथाय पुरान्तकाय तस्मै मकाराय नमः शिवाय॥
शिवा-मुखाम्भोज विकासनाय दक्षस्य यज्ञस्य विनाशकाय।
चन्द्रार्क-वंशवा नरलोचनाय तस्मै शिकाराय नमः शिवाय॥
वशिष्ठ कुम्भोत्-भवगौतमादि-मुनीन्द्र वन्द्याय गिरीश्वराय
श्री नील कण्ठाय वृषध्वजाय तस्मै वकाराय तमः शिवाय।
यज्ञ स्वरूपाय जटाधराय पिनाक हस्ताय सनातनाय ।
नित्याय शुद्धाय निरञ्जनाय तस्मै यकाराय नमः शिवाय

ॐकारं बिन्दुसंयुक्तं नित्यं ध्यायन्ति योगिनः,
कामद मोक्षदं चैव ओंकारा तं नमाम्यहम ।
न जातो न मृतो यश्च क्षयो यस्य न विद्यते,
नमन्ति देवता: सर्वे नकारं त० .........
महादेवं महावक्रं महाध्यानपरायणम्,
महापापहरं देवं मकारं त० .........

शिवात्परतरो नास्ति शिवशास्त्रेषु निश्चयः,
शमन्ति सर्व पापानि शिकारं त० ........

वाहनं वृषभो यस्य वासुकिः कण्ठ भूषणम् ,
वामे शक्तिधरं देवं वकारं त० ........

यत्र तत्र स्थितो देवः सर्व व्यापी महेश्वर,
यो गुरू सर्वदेवानां यकारं त० ........

ॐकारं कर्म चक्रेषु नकारं नाभिमण्डले,
मकारं हृदये देशे शकारं कण्ठ भूषणम् ।
वकारं वक्रमध्ये तु यकारं ब्रह्मरन्ध्रगम,
एवं षडक्षरस्तोत्रं यः पठेच्छिव सन्निधौ ।
शिवलोकमवाप्नोति शिवेन सह मोदते ॥



ब्रह्मा तु शंकर तिम ति छिय हा'रिथ
चात्रि शक्तिय हंज़ महिमा नु जानान
सो'य चण्डी दीवी र'छतन म्य
यो'सु सा'रिसुय ज़गतस छिय पालान
दियतन म्य तिछ बो,द्ध यह'य ज़गतमाता
यमि सा'त्य अशुभ भय छु नष्ट सपदान

आय०

**देवि ! त्र्यम्बक पत्नि ! पार्वति ! सति ! त्रैलोक्य मातः ! शिवे !**

**शर्वाणि ! त्रिपुरे ! मृडानि ! वरदे ! रुद्राणि !**
**कात्यायिनि ! भीमे ! भैरवि ! चण्डि ! शर्वरि ! कले कालक्षये ! शूलिनि !**
**त्वत्-पाद-प्रणतान-अनन्यमनसः पर्याकुलान्पाहि नः ॥**

(पं० १-३)

ही दीवी छक चु त्र्यम्बकु पत्नी
च'यय वनान सती च.्य पार्वती
त्रैलोकी हुन्ज़ माता भगवनी
च.्य वर दिवान छख च.् मृडानी
च.्य त्रिपोरु सोन्दरी च.्य रुद्राणी
च.्य भयानक रुप च.्य शरवरी
च.्य चंडी त्रिशूल धारा'णी
च.्य काली कालस नाश करा'नी

**त्वद्रूपैक निरुपण प्रणयिता बन्धो दृशोस्त्वदगुण-**
**ग्रामाकर्णनरागिता श्रवणयो स्त्वत्संस्मृतिश्चेतसि ।**
**त्वत्पादार्चन चातुरी करयुगे, त्वत्कीर्तनं वाचि मे**
**कुत्रऽपि त्वदुपासनव्यसनिता, मे देवि ! मा शाम्यतु ॥**

(पं० २-२७)

ही दीवी चा'ञि दर्शनुक म्य अभिलाष
प्रथ विज़ि नेत्रन मंज़ रुज़ितन
चा'ञ गुण बोजनुक तमुन्ना म्य आ'स्यतन
प्रथ विज़ि रुज़ितन म्यान्यन कनन
चा'न्य नामु स्मरण च्ऺयतस मंज़ म्य गुरि गुरि
चा'ञ पाद्य पूज़ा म्यान्यन अथन
चा'ञ कीर्तन करुवुन्य रुज़ितन वा'णी
उपासना चा'ञ कम मतु म्य गछ़ितन

आय०

**देवि ! त्वां सकृदेव यः प्रणमति, क्षोणीभृतस्तं नमन्त्या जन्म स्फुरदङ्घ्रिपीठविलुठत्कोटीर कोठिच्छटाः**
**यस्त्वामऽर्चति सोऽर्च्यते सुरगणैर्यः स्तौति स स्तूयते**
**यस्त्वां ध्यायति तं स्मरार्ति विधुरा ध्यायन्ति वामभ्रुवः**

(पं० ३-३)

युस पुरुष अकि लटि करि च्ऺयय कुड प्रणाम
तसुन्ज़ि ख्रावि प्यठ छि इन्द्राज़ु नमान
युस पुरुष करान आसि माता चा'न्य पूज़ा
पूज़ान तस छि सा'री दिवता
युस पुरुष करान आसि माता चा'न्य स्तुता
तमि सुन्ज़ अस्तुतिः छि दिवता करान
युस पुरुष करान आसि माता चोनुय ध्यान
स्वर्ग_ चि अछ़ु रछ़ तस छि स्मराण

आय०

**किं किं दुखं दनुज दलिनि ! क्षीयते न स्मृतायां**
**का का कीर्तिः कुल कमलिनि ! ख्याप्यते न स्तुतायाम्।**

**का का सिद्धिः सुरवरनुते प्राप्यते नार्चितायां**
**कं कं योगं त्वयि न चिन्वते चित्तमालम्बितायाम्**
(पं ३-१५)

कम सना दुख छि तिम ही दुखन गालुवुन्य
यिम गलन नु चाञ्ज स्मरणि सा'त्य
को'सु नु नेकनामी यो'सु कुलस खारुवुन्य
यों'सु नु बनि चाञ्जे तुतायि सा'त्य
को'सु को'सु छि सिद्धि ही सिद्धिदात्री
यो'सु नु प्राप्त सपदि चानि पूज़ायि सा'त्य
कम कम छि तिम यूग ही ज़ागतमाता
यिम नु स्यद्ध बनन चाञि चिन्तनु सा'त्य
आय०

**ददातीष्टानभोगान्क्षपयति रिपून्हन्ति विपदो**
**दहत्याधीन व्याधीन्शमयति सुखानिप्रतनुते।**
**हटादऽन्तदु:खं दलयति पिनष्टीष्टविरहं**
**सकृदध्याता देवी किमिव निरवधं न कुरुते।**
(पं ३-१३)

मतलब छख दिवान दुश्मनन गालान
आपुदायन छक नाशु करान
मन वयन रूगन माता च़्_य गालान
दीह_ चन व्या'ज़न सौं'मुरावान
संसारुच्य यिम सुख संपुदायि बजि
माता तिमन छय व्यस्तारान
अन्दरिम दु:ख त दाग्य ज़ीवस च़्_य गालान
यिम हय अकि लटि माता नाव चोन सो'रान
तिम कम सना पापव निशि छिनु मौ'कु_लान
यिम सदा च़्यय कुन गुलि गंडिथ छि रोज़ान

**दुर्गे स्मृता हरसि भीतिमशेषजन्तोः**
**स्वस्थैः स्मृता मतिमतीव शुभां ददासि ।**
**दारिद्र्य दुःख भयहारिणि का त्वदन्या**
**सर्वोपकार करणाय सदार्द्रचिता ॥**

(दु० सप्त)

हीं दुर्गे चा'ञ समरणि ज़ीवस
सा'री भय छि नाश सपदान
वार् पा'ठ्य करिय युस चा'न्य स्मरण
त्यलि छक ज्ञानुच वथ हावान
दरिद्र भावय ब्ययि कठिन दो'ख तु दा'द्य
चेयय रो'स कुस छु म्य दूर करान
उपकार छक करान तिमन सारिनुय ज़ीवन
यिम सदा च.यय कुन गुल्य गंडिथ छि रोज़ान

आय०

**मन्त्रहीनं क्रियाहीनं विधि हीनं च यद्गतम्**
**त्वया तत्क्षम्यतां देवि ! कृपया परमेश्वरि ।**

(पं० ३-२४)

मन्त्रहीन आ'सिथ क्रियाहीन आ'सिथ
व्यधिहीन आ'सिथ यि कैंछ़ाह पो'रुम
वो'न्य हय तथ सा'रिसुय ही परमीश्वरी
कृपायि किञ म्य आ'रतिस माता बखुशुम
आ'सि आमित एकाग्र च.यथ बनिथ
छुस प्यबान च.यय हय पादन तल परन



## ॥ अथ ध्यानम् ॥

गौरीश्वराय भुवनस्त्रयकारणाय
भक्तिप्रियाय भवभीतिभिदे भवाय ।
शर्वाय दुःखशमनाय वृषध्वजाय
रुद्राय कालदहनाय नमः शिवाय ॥



आधीनां अगदं दिव्यं व्याधीनां मूलकृन्तनं
उपद्रुवाणां दलनं महादेवं उपास्महे

[ स्वर्गीयगोविन्दस्वामिना कश्मीरीभाषायां
विरचिता गुरुस्तुति ]

शिव शङ्कर भय भय हर हर लगयो च़रणन् ।
गुरु लगयो पादि कमलन् सत् गुर् लगयो च़रितन् ॥

च़रणन् तल वार् वरतम वरदा छुक शरणन्
शरणय च़यय आस कासतम मल म्य अन्तः करणन्
कर शङ्कर कर रटहम कर अर हर मरणन्
मर मर छुम ज़यन मरनुक अमरेश्वर भगवन्
पादि कमलन तल म्य पालतम पालवुन छुक
कालहन्
हनि हनि शिव च़य वछहथ यव दुय गलि हन हन्
शिव०

दय अदुय द'य म्य गच्छ़तम कर दय दय निशि दिन
दीन दयाल कऩ म्य थावतम दीन वचऩन् त वदनन्
ज़र ज़र छुम ज़ो'ज़रनकुय ज़ुरनावतम मत्य हऩ्
हननावन हननावतम मन्य मो'ह युथ मुनियन्
देह पुष्ट मन तुष्ट थावतम देव ज़ुष्ट छुक दुष्टहऩ्
पानै ईश्वर पानै तोषतम् पान वन्दयो तोषणन्
शिव०

अन्त कुस ज़ानि च़्य अनन्तस सन्त व्यसरेय चिन्तनन्
क्याह निश्चय करि वेदान्ती यति वेद लगि पन्थनन्
ब्रह्मादिक ति ग'य मोहस तत्त्व चोन क्या व्यज़रन्
तत्पुरुष च़्य तत्त्व म्य भावतम वथ म्य हावतम ज़ाननन्
गथ च़्य सिद्ध शुद्ध मुनियन सथ छम शाप मोचऩन्
शाप मोचऩ ज्ञान लोचऩ पा'र्य आ'र्य लोचऩन्
शिव०

तीज़ो रूप तेज़ छुक सोम सूर्यन त अग्नन्
तीज़ो रूप च़्य भासान वाह्य अन्तर यूगियन्
स्वप्रकाश स्वानुभवगम शान्त तीजः ज्ञानियन्
ज़ान ज़ानिन ज़ाननीय च़्य क्याह ब ज़ान चानि
ज़ान व्यन्

शिव म्यति दित कर्मसुम स्य'ज़ ज़ान यिछ ज़नकादयकन्
ज्ञान व-पदीश पान वरतम फ़र अज्ञान पटलन्
शिव०

निष्कारण सर्व कारण च़्य कारण कारणन्
त्रेकार छुक च़्य कारण सृष्ट स्थित तै प्रलयन्
च़्य कर्ता च़्य भर्ता च़्य हर्ता ज़गतन्
व्याप्य व्यापक भाव व्यापित च़्य निरन्तर भवनन्
भोजि़ क्याह् वन च़ जि़ क्याह् छुक युस न ज़ोन
कां'सि ज़ा'न्य व्यन्
ज़ान सा'रय चा'न्य दया चा'न्य कृपा भगवन्
शिव०

दीव पज़्य छुक दीव पूज़नीय पूज़ा व्यध पूज़नन्
विजि़ विजि़ भोजि़ पजि़ पूज़ह्थ युथ पूज़नख विष्णन्
भाव बामन फोलना'विथ माल् करह्य कोसमन
बो सो'मन्य व्यन लागह्य श्ययि गोंध्य करहय् कोसमन
सो वन्दि यछि़ पछि़ हन्दि पोष लागह्य पादि कमलन
पादि कमलन तल म्य पालतम तल ह्यय क्यथ विघ्नन्
शिव०

शुद्ध निर्मल शिव पूज़ह्थ यव् सपनिय शुद्ध मन्
शुद्ध मन् च्योन ध्यान दा'रिथ शुद्ध स्फाटिक विकसन
नीलकण्ठस छु हटि वासक चि़त्त आत्मस तमोगुण
सुधा धारा गङ्ग ह्यरि शेरि छय तारवञ्ञ सुजि़ नरकन्
शिवा धा'रमच वाम भागस चि़त् शक्ति चि़त् आत्मन्
धर्म रूप बृषभ वगि त्रिशूल त्रि अवस्थायि अथि सन्
शिव०

श्वेत सुन्दर छोत भस्मा तनि प्रकट योग सतोगुन
मुण्ड माला गलि गन्डमच् रोष कोरमुत इन्द्रियन्
क्याह छय जटा मुकट शोभान छ़ल गों'ण्डमुत रजोगुण
टें'कि शाय हेरि डें'कि चन्द्रम प्रकट युथ च्योन शुद्ध मन
दिक् वासन निर्वासन वास च्योन मन्य सुमनन
त्रिवास छुख ज्ञान बोज़तय त्रिकार रूप त्रिनयनन्

शिव०

मायातीत माया चा'न्य त्रिगुण सुत्य विकसन्
निर्गुण छुक गुण उल्लङ्गित माया गुण विलसन्
भूत भावत भूत-पंचक देह खर कोर अहमन
दह इन्द्रिय मन बोध ह्यथ प्राणबल सुत्य प्रसरण
सच्चिदानन्द रूप आतमन ज़ीदभावस कोर शयन
तदात्म भाव देह की लोभ प्रकृत बल ज़ीवनन

शिव०

मोह ज़ाल सुत्य ज़ीव गण्डनै आव कर्मन्यन बन्धनन
काम क्रोधन स्थित रटनस प्यठ मनस बोज़ त इण्द्रियन
द्वन्द्व भावत रागद्वेष सुत्य काप्य लो'ग षट् शुत्रन
गुण सङ्ग सुत्य इत गछ़िय लो'ग पुण्य पाप वश बांधज़न
मोकजारुक पाय च़य शिव मोक्षदा छुक भक्तयन
भवबन्धन मोकलावतम छुक च़य भव भयहन्

शिव०

निष्यपञ्च च्योन सोरुय प्रपञ्च वाञ्छ छम कस बर कन
वेनच़ क्याह कर चञ्चल मन संसार क्यन ख्येंचलन
हरे हर विरिञ्चि बोज़तम क्याह वन पञ्च दैवतन
पञ्चवदन मुकलावतम केंह अन्त छु न चानि व्यन
कुन कुन कुन कुनुय तोषतम केंह अन्त छुन हेंरि बो'न
र्‌ति मु_ख मु_ख सु_ख वरतम सुख सुन्दर दुःख हन्
शिव०

सम दितम संपदा यव समि सोम रोज़हा समयन
सम यस गछ़ि़य चा'न्य दया लगि सुम स्यज़ सनयत
सम्य समिरस प्रथ गुण किञ समयन तय साधनन
सोम आहार सोम विहार सोम निद्रा त जागरण
संभालिथ पानस सोम सोम शुज़रिथ शायहन
समाध योग सम स्यज़ विजि़ लग्य सत् गुरु वचनन्
शिव०

भक्ति प्रिय भक्ति दायक़ दय युस इच्छहन भक्ति ज़न
भक्ति भावत़ भक्ति भावनाय च़यय कुन लग्य निशि दिन
भक्ति वत्सल भक्ति छलबल बल फिरि गुड विषयन
दरि श्रद्धाय ध्यान धा'रिथ रटि प्राण बुद्धचित़ त़ मन
यम नियम शम दम सम्य मन सो'रि सुय दय क्षण क्षण
मन ज़ो'निथ पोज़ च़ो'निथ गछि ज़ो'निथ भवनन
शिव०

यस संस्रति पोत अचि़ मन सुस्त आ'स्यतन विभवन
लोर आ'स्यतन अन्न धन्न घरबारन त सन्तनन
व्यवहार क्यन काम्यन प्यठ परद्यन हंज़ कामि ज़न
प्रारब्धुन भोग भोगान् भोगवुन ज़न स्वप्नन
रागीज़न आर्यसय सा'त्य त्यागित सर्व कामनन्
गच्छि संसार सर ता'रिथ लड करान सूह ज़न

शिव०

युदवै कां'सि ओरै यीयि मंग संग मेल्यस साधुज़न
साधुजन युस समि चि़त्त नाय ममताय निश आसि भिन
भ्योन रुत क्रुत द्वन्द्व भावन छ़्यन दिथ सर्व कामनन
शम दम ज्ञान विज्ञान सोस्त रुस्त कपटन त़ कल्पनन
ब्रह्म तत्पर आसि आस्यस परेहट सर्व विषयन
बोड दुर्लभ ब्रह्म रूप योथ 'लभ्य ज्योव' ह्योह साधुजन

शिव०

युस कांह यछि पानस रुत क्रुत त्रावि प्रावि शुद्ध मन
शुद्ध मन भक्ति भावनायि कन थावि साधु वचनन
साधु वचनव प्राव्य जाग्रत ज़ाग्य ज़ाग ह्यथ समयन
समय वात्यस शम यम नियम पानै ता'र्य तस मुच़रन
दीन दयाल हे कृपाल कां'स्य गथ छ़्यन चान्य ब्यन
सत् भाव छम सथ चा'ञी सत् गथ दिम भगवन

शिव०

त्यलि च.यूनुम भोजि. क्याह छुस यलि वा'च.म च.नवञ

च.नन आयम दया चा'ञ च.ननावान सेवकन

भक्त युदवै मुक्त थावहम मुक्त छुस निष बन्धनन

सुप्रकाशत अविनाशी मा'श्यविथ ज.यन मरनन

सत चित्त आनन्द रूपस स्थित न्यथ ह्यथ निर्गुण गुण

प'ज. दया चा'ञ भगवन करि क्याह म्या'ञ वन वन

शिव०

शांत निर्मल भ्रांत चान्य छम मानतम सा'र वन वन

अख शो'भ दृष्टि शिव करतम नाव चोन शुभाशुभन

शुभदायक शुभ दृष्टि चा'य सा'रय शूभ शूभियन

शुभवुन च.ध्य त्रन भवनन शूभ्रहथ पोष वर्षणन

शूभरावतम ज्ञान सम्पदा शूभ यथ यियि ज.गतन

शूभ सा'रय चा'ञ दया चा'ञ कृपा भगवन

शिव०

अविनाश ब'ड आश पूरतम नाश करहा कल्पनन

आशा पूर' आशा चा'ञ आश छम राश पपनन

घटि हन्दि घाश चि.त्त् प्रकाशि घाश अनतम नेत्रन

नाशविथ रूज. सर्व कल्पनन नाशविथ सर्व वासनन

प्रकाश शान्त सु प्रकाश च.य घाशुर घाशरन

परि प्रसाद गूर प्रसाद गुरु प्रसाद भगवन

शिव०

संसारचिय छोच़ आशा शुर्य मुर्य तय सन्तनन
भा'य बन्ध तय धन संपत घर बार तय स्त्रीज़न
सोर असोर भ्रम सोरुय मृगतृष्णा यिथ ज़न
शिव च़्य म्या'ञ शुर्य मुर्य तय भा'य बन्ध तय सा'री ज़
च़्य मोल मा'ज च़्य घरबार च़्य संपत द्यार धन्न
च़्य सोरुय च्यय सारिय सहार रोज़तम भगवन
शिव०

लूभ छुम न स्वर्गन हुन्द क्षूभ तिन् भ्ययि नर्कुन
रुत क्रुत सोख दोख भूगान फल पनञ्यन कर्मन
शिव नाव सा'त्य थर थर अचा़न दूरि यम किंकरण
शिव भक्त संज़् सहाय छा़ंडान माय पनञ देवगण
अख शो'भ दृष्टि शिव छम चा'ञ लछ विभवन तु स्वर्गन
सोय शुभ दृष्टि शिव करतम पानय वरतम भगवन
शिव०

नव नाथीश्वर च़्य छुक नव निधान सेवकन
नवि खोत नोव नोव ब वुछहथ लगि नव नव नवनन
नव गंडिथ नव रटिथ प्रणव नोव व्यवहारण
नोव दक्षिपाल ह्यथ रोज़तम ईश राच्छ विघ्नन
नवदुर्गा करि पक्ष करि सोन युस रक्षक छ शरणन
नव द्वार पुर खस वुफ ह्यथ नववनीय शेव भवनन
शिव शंकर भव भय हर हर लगयो च़रणन् ।
गुर लगयो पादि कमलन सत गुर लगयो च़रितन् ॥

## अथ भवानी नाम सहस्त्र स्तु तिः ॥

### ॐ नमो भवान्यै ॥

ॐ अरि शंख कृपाण खेट बाणान्
सुधनुः शुलक तर्जनीं दधाना ।
भवतां महिषोत्तमाङ्ग संस्थां,
नवदूर्वा सदृशी श्रियेऽस्तु दुर्गा ॥

ॐ शङ्खत्रिशूलशरचापकरां त्रिनेत्रां,
तिग्मेतरांशुकलया विलसत्किरीटाम् ।
सिंहस्थितामसुरसिद्धनुतां च दुर्गा,
दूर्वानिभां दुरितदुःखहरां नमामि । १

अकुलकुलपतन्ती चक्रमध्ये स्फुरन्ती,
मधुरमधुपिवन्ती कण्टकान्भक्षयन्ती ।
दुरितमपहरन्ती साधकान्पोषयन्ती,
जयति जगति देवी सुन्दरी क्रीडयन्ती । २

चतुर्भुजामेकवक्त्रां पूर्णेन्दुवदनप्रभाम्,
खड्गशक्तिधरां देवीं वरदाभयपाणिकाम् । ३

प्रेतसंस्थां महारौद्रीं भुजगेनोपवीतिनीम्,
भवानीं कालसंहारबद्धमुद्राविभूषिताम् । ४

जगत्स्थितिकरीं ब्रह्मविष्णुरुद्रादिभिः सुरैः,
स्तुतां तां परमेशानीं नौम्यहं विघ्नहारिणीम् । ५

ॐ नमो भवान्यै ।

कैलासशिखरे रम्ये देवदेवं महेश्वरम्,
ध्यानोपरतमासीनं प्रसन्नमुखपङ्कजम् ।६
सुरासुरशिरोरत्नरञ्जिताङ्घ्रियुगं प्रभुम्,
प्रणम्य शिरसा नन्दी बद्धाञ्जलिरभाषत ।७

श्रीनन्दिकेश्वर उवाच ॥

देवदेव जगन्नाथ संशयोस्ति महान्मम,
रहस्यमेकमिच्छामि प्रष्टुं त्वां भक्तवत्सलम् । ८
देवतायास्त्वया कस्याः स्तोत्रमेतद्दिवानिशम्,
पठ्यतेऽविरतं नाथ ! त्वत्तः किमपरं परम् । ९
इति पृष्टस्तदा देवो नन्दिकेन जगद्गुरुः,
प्रोवाच भगवानेको विकसन्नेत्रपङ्कजः । १०

श्रीभगवानुवाच ॥

साधु साधु गणश्रेष्ठ पृष्टवानसि मां च यत्,
स्कन्दस्यापि च यद्गोप्यं रहस्यं कथयामि तत् । ११
पुरा कल्पक्षये लोकान्सिसृक्षुर्मूढचेतसा,
गुणत्रयमयी शक्तिर्मूलप्रकृतिसंज्ञिता । १२
तस्यामहं समुत्पन्नस्तत्त्वैस्तैर्महदादिभिः,
चेतनेति ततः शक्तिर्मां काप्यालिङ्ग्य तस्थुषी । १३

हेतुः सकल्पजालस्य मनोधिष्ठायिनी शुभा,
इच्छेति परमा शक्तिरुन्मिमील ततः परम् । १४
ततो वागिति विख्याता शक्तिः शब्दमयी परा,
प्रादुरासीज्जगन्माता वेदमाता सरस्वती । १५
ब्राह्मी च वैष्णवी रौद्री कौमारी पार्वती शिवा,
सिद्धिदा बुद्धिदा शान्ता सर्वमङ्गलदायिनी । १६
तयैतत्सृज्यते विश्वमनाधारं च धार्यते,
तयैतत्पाल्यते सर्वं तस्यामेव प्रलीयते । १७
अर्चिता प्रणता ध्याता सर्वभावविनिश्चिता,
आराधिता स्तुता सैव सर्वसिद्धिप्रदायिनी । १८
तस्या अनुग्रहादेव तामेव स्तुतवानहम्,
सहस्रैर्नामभिर्दिव्यैस्त्रैलोक्यप्राणिपूजितैः । १९
स्तवेनानेन सन्तुष्टा मामेव प्रविवेश सा,
तदारभ्य मया प्राप्तमैश्वरं पदमुत्तमम् । २०
तत्प्रभावान्मया सृष्टं जगदेतत् चराचरम्,
ससुरासुरगन्धर्व यक्षराक्षसमानवम् । २१
सपन्नगं साब्धिकं च सशैलवनकाननम्,
सराशिग्रहनक्षत्रं पंचभूतगुणान्वितम् । २२
नन्दिन्नामसहस्रेण स्तवेनानेन सर्वदा,
स्तुवे परापरां शक्तिं ममानुग्रहकारिणीम् । २३
इत्युक्तोपरतं देवं चराचरगुरुं विभुम्,
प्रणम्य शिरसा नन्दी प्रोवाच परमेश्वरम् । २४

श्रीनन्दिकेश्वर उवाच ।

भगवन्देव देवेश लोकनाथ जगत्पते,
भक्तोऽस्मि तव दासोऽस्मि प्रसादः क्रियतां मयि । २५
देव्याः स्तवमिमं पुण्यं दुर्लभं यत्सुरैरपि,
श्रोतुमिच्छाम्यहं देव प्रभावमपि चास्य तु । २६

श्री भगवानुवाच ।

श्रृणु नन्दिन्महाभाग स्तवराजमिमं शुभम्,
सहस्रैर्नामभिर्दिव्यैः सिद्धिदं सुखमोक्षदम् । २७
शुचिभिः प्रातरुत्थाय पठितव्यं समाहितैः,
त्रिकालं श्रद्धया युक्तैर्नातः परतरः स्तवः । २८

अस्य श्रीभवानीनामसहस्रस्तवराजस्य, महादेव-ऋषिः, अनुष्टुप्छन्दः, आद्याशक्तिः, भगवती भवानी देवता, ह्रीं बीजं, श्रीं शक्तिः, क्लीं कीलकं, आत्मनो वाङ्मनःकायोपार्जितपापनिवारणार्थं, सकलकामना सिद्ध्यर्थे पाठे/होमे विनियोगः ।

अथ करन्यासः

ॐ एकवीरायै अङ्गुष्ठाभ्यां नमः ।
ॐ महामायायै तर्जनीभ्यां नमः ।
ॐ पार्वत्यै मध्यमाभ्यां नमः ।
ॐ गिरीशप्रियायै अनामिकाभ्यां नमः ।
ॐ गौर्यै कनिष्ठकाभ्यां नमः ।
ॐ करालिन्यै करतलकरपृष्ठाभ्यां नमः ।

## अथ षडङ्गन्यासः ।

ॐ एकवीरायै हृदयाय नमः ।

ॐ महामायै शिरसे स्वाहा ।

ॐ पार्वत्यै शिखायै वषट् ।

ॐ गिरीशप्रियायै कवचायहुम् ।

ॐ गौर्यै नेत्राभ्यां वौषट् ।

ॐ करालिन्यै अस्त्रायफट् ।

## ततः प्राणायामः

## अथ ध्यानम्

अर्धेन्दुमौलिममलाममराभिवन्द्याम-
म्भोजपाशसृणिरक्तकपालहस्ताम् ।
रक्ताङ्गरागरशनाभरणां त्रिनेत्रां
ध्याये शिवस्य वनितां मधुविह्वलाङ्गीम् ।

बालार्कमण्डलाभासां चतुर्बाहुं त्रिलोचनाम् ।
पाशांकुशशरांश्चापं धारयन्तीं शिवां भजे ।
ॐ बीजत्रयायै विद्महे, तत्प्रधानायै धीमहि, तन्नः
शक्तिः प्रचोदयात् । ३

मूलम्— ॐ श्रीं श्रीं ॐ ॐ ह्रीं श्रीं श्रीं भवानि
हुं फट् स्वाहा । १०८

श्री ईश्वर उवाच

ॐ महाविद्या जगन्माता महालक्ष्मीः शिवप्रिया,
विष्णुमाया शुभा शान्ता सिद्धा सिद्धसरस्वती । १
क्षमा कान्तिः प्रभा ज्योत्स्ना पार्वती सर्वमङ्गला,
हिङ्गुला चण्डिका दान्ता पद्मा लक्ष्मीर्हरिप्रिया । २
त्रिपुरा नन्दिनी नन्दा सुनन्दा सुरवन्दिता,
यज्ञविद्या महामाया वेदमाता सुधा धृतिः । ३
प्रीतिर्प्रथा प्रसिद्धा च मृडानी विन्ध्यवासिनी,
सिद्धविद्या महाशक्तिः पृथ्वी नारदसेविता । ४
पुरुहूतप्रिया कान्ता कामिनी पद्मलोचना,
प्रह्लादिनी महामाता दुर्गा दुर्गतिनाशिनी । ५
ज्वालामुखी सुगोत्रा च ज्योतिः कुमुदहासिनी,
दुर्गमा दुर्लभा विद्या स्वर्गतिः पुरवासिनी । ६
अपर्णा शाम्बरीमाया मदिरा मृदुहासिनी,
कुलवागीश्वरी नित्या नित्यक्लिन्ना कृशोदरी । ७
कामेश्वरी च नीला च भीरुण्डा वह्निवासिनी,
लम्बोदरी महाकाली विद्याविद्येश्वरी तथा । ८
नरेश्वरी च सत्या च सर्वसौभाग्यवर्धिनी,
संकर्षणी नारसिंही वैष्णवी च महोदरी । ९
कात्यायनी च चम्पा च सर्वसम्पत्तिकारिणी,
नारायणी महानिद्रा योगनिद्रा प्रभावती । १०

प्रज्ञापारमिता प्रज्ञा तारा मधुमती मधुः,
क्षीरार्णवसुधाहारा कालिका सिंहवाहिनी । ११
ओंकारा वसुधाकारा चेतना कोपनाकृतिः,
अर्धबिन्दुधरा धारा विश्वमाता कलावती । १२
पद्मावती सुवस्त्रा च प्रबुद्धा च सरस्वती,
कुण्डासना जगद्धात्री बुद्धमाता जिनेश्वरी । १३
जिनमाता जिनेन्द्रा च शारदा हंसवाहना,
राज्यलक्ष्मीर्वषट्कारा सुधाकारा सुधात्मिका । १४
राज्यनीतिस्त्रयी वार्ता दण्डनीतिः क्रियावती,
सद्भूतिस्तारिणी श्रद्धा सद्गतिः सत्परायणा । १५
सिन्धुर्मन्दाकिनी गंगा यमुना च सरस्वती,
गोदावरी विपाशा च कावेरी च शतद्रुका । १६
सरयूश्चन्द्रभागा च कौशिकी गण्डकी शुचिः,
नर्मदा कर्मनाशा च चर्मण्वत्यथदेविका । १७
वेत्रवती वितस्ता च वरदा नरवाहना,
सती पतिव्रता साध्वी सुचक्षुः कुण्डवासिनी । १८
एकचक्षुः सहस्राक्षी सुश्रोणिर्भगमालिनी,
सेना श्रेणिः पताका च सुव्यूहा युद्धकांक्षिणी । १९
पताकिनी दयारम्भा विपञ्चीपञ्चमप्रिया,
परापरकलाकान्ता त्रिशक्तिर्मोक्षदायिनी । २०
ऐन्द्री माहेश्वरी ब्राह्मी कौमारी कुलवासिनी,
इच्छा भगवती शक्तिः कामधेनुः कृपावती । २१

वज्रायुधा वज्रहस्ता चण्डी चण्डपराक्रमा,
गौरी सुवर्णवर्णा च स्थितिसंहारकारिणी । २२
एकानेका महेज्या च शतबाहुर्महाभुजा,
भुजङ्गभूषणा भूषा षट्चक्रक्रमवासिनी । २३
षट्चक्रभेदिनी श्यामा कायस्था कायवर्जिता,
सुस्मिता सुमुखी क्षामा मूलप्रकृतिरीश्वरी । २४
अजा च बहुवर्णा च पुरुषार्थप्रवर्तिनी,
रक्ता नीला सिता श्यामा कृष्णा पीता च कर्बुरा । [illegible]
क्षुधा तृष्णा जरावृद्धा तरुणी करुणालया,
कला काष्टा मुहूर्ता च निमेषा कालरूपिणी । २६
सुकर्णरसना नासा चक्षु:स्पर्शवती रसा,
गन्धप्रिया सुगन्धा च सुस्पर्शा च मनोगतिः । २७
मृगनाभिर्मृगाक्षी च कर्पूरामोदधारिणी,
पद्मयोनिः सुकेशी च सुलिङ्गा भगरूपिनी । २८
योनिमुद्रा महामुद्रा खेचरी खगगामिनी,
मधुश्रीर्माधवीवल्ली मधुमत्ता मदोद्धता । २९
मातङ्गी शुकहस्ता च पुष्पबाणेक्षचापिनी,
रक्ताम्बरधरा क्षीबा रक्तपुष्पावतंसिनी । ३०
शुभ्राम्बरधरा धीरा महाश्वेता वसुप्रिया,
सुवेणिः पद्महस्ता च मुक्ताहारविभूषणा । ३१
कर्पूरामोदनिःश्वासा पद्मिनी पद्ममन्दिरा,
खड्गिनी चक्रहस्ता च भुसुण्डी परिधायुधा । ३२

चापिनी पाशहस्ता च त्रिशूलवरधारिनी,
सुबाणा शक्तिहस्ता च मयूरवरवाहना । ३३
वरायुधधरा वीरा वीरपानमदोत्कटा,
वसुधा वसुधारा च जया शाकम्भरी शिवा । ३४
विजया च जयन्ती च सुस्तनी शत्रुनाशिनी,
अन्तर्वत्नी वेदशक्तिर्वरदा वरधारिणी । ३५
शीतला च सुशीला च बालग्रहविनाशिनी,
कुमारी च सुपर्वा च कामाख्या कामवन्दिता । ३६
जालन्धरधराऽनन्ता कामरूपनिवासिनी,
कामबीजवती सत्या सत्यधर्मपरायणा । ३७
स्थूलमार्गस्थिता सूक्ष्मा सूक्ष्मबुद्धिप्रबोधिनी,
षट्कोणा च त्रिकोणा च त्रिनेत्रा त्रिपुरसुन्दरी । ३८
वृषप्रिया वृषारूढा महिषासुरघातिनी,
सुम्भदर्पहरा दीप्ता दीप्तपावकसन्निभा । ३९
कपालभूषणा काली कपालमालधारिणी,
कपालकुण्डला दीर्घा शिवादूती घनध्वनिः । ४०
सिद्धिदा बुद्धिदा नित्या सत्यमार्गप्रबोधिनी,
कम्बुग्रीवा वसुमती छत्रच्छायाकृतालया । ४१
जगद्गर्भा कुण्डलिनी भुजगाकारशायिनी,
प्रोल्लसत्सप्तपद्मा च नाभिनालमृणालिनी । ४२
मूलाधारा निराकारा वह्निकुण्डकृतालया,
वायुकुण्डसुखासीना निराधारा निराश्रया । ४३

श्वासोच्छ्वासगतिर्जीवा ग्राहिणी वह्निसंश्रया,
वह्नितन्तुसमुत्थाना षड्रसास्वादलोलुपा । ४४
तपस्विनी तपःसिद्धिः तापसी च तपः प्रिया,
तपोनिष्ठा तपोयुक्ता तपसः सिद्धिदायिनी । ४५
सप्तधातुमयीमूर्तिः सप्तधात्वन्तराश्रया,
देहपुष्टिर्मनस्तुष्टिरन्नपुष्टिर्बलोद्धता । ४६
ओषधिः वैद्यमाता च द्रव्यशक्तिः प्रभाविनी,
वैद्या वैद्यचिकित्सा च सुपथ्या रोगनाशिनी ४७
मृगया मृगमांसादा मृगत्वङ्मृगलोचना,
वागुरा बन्धरूपा च वधरूपा वधोद्धता । ४८
बन्दी बन्दिस्तुताकारा काराबन्धविमोचनी,
श्रृङ्खला खलहा विद्युद्दृढबन्धविमोचनी, । ४९
अम्बिकाऽम्बालिकाचाम्बा स्वक्षा साधुजनार्चिता,
कौलिकी कुलविद्या च सुकुला कुलपूजिता । ५०
कालचक्रभ्रमा भ्रान्ता विभ्रमा भ्रमनाशिनी,
वात्याली मेघमाला च सुवृष्टिः सस्यवर्द्धिनी । ५१
अकारा च इकारा च उकारैकाररूपिणी ।
ह्रींकारी बीजरूपा च क्लींकाराम्बरवासिनी ५२
सर्वाक्षरमयीशक्तिरक्षरा वर्णमालिनी ।
सिन्दूरारुणवक्त्रा च सिन्दूरतिलकप्रिया । ५[illegible]
वश्या च वश्यबीजा च लोकवश्यविभाविनी
नृपवश्या नृपैःसेव्या नृपवश्यकरी क्रिया । ५[illegible]

महिषी नृपमान्या च नृमान्या नृपनन्दिनी,
नृपधर्ममयी धन्या धनधान्यविवर्द्धिनी । ५५
चतुर्वर्णमयीमूर्तिश्चतुर्वर्णैश्चपूजिता,
सर्वधर्ममयीसिद्धश्चतुराश्रमवासिनी । ५६
ब्राह्मणी क्षत्रिया वैश्या शूद्राचावरवर्णजा,
वेदमार्गरता यज्ञा वेदविश्वविभाविनी । ५७
अस्त्रशस्त्रमयीविद्या वरशस्त्रास्त्रधारिणी,
सुमेधा सत्यमेधा च भद्रकाल्यऽपराजिता । ५८
गायत्री सत्कृतिः सन्ध्या सावित्री त्रिपदाश्रया,
त्रिसन्ध्या त्रिपदी धात्री सुपर्वा सामगायनी । ५९
पाञ्चाली बालिका बाला बालक्रीडा सनातनी,
गर्भाधारधरा शून्या गर्भाशयनिवासिनी । ६०
सुरारिघातिनीकृत्या पूतना च तिलोत्तमा,
लज्जा रसवती नन्दा भवानी पापनाशिनी । ६१
पट्टाम्बराधरा गीतिः सुगीतिर्ज्ञानलोचना,
सप्तस्वरमयीतन्त्री षड्जमध्यमधैवता । ६२
मूर्च्छनाग्रामसंस्थाना स्वस्था स्वस्थानवासिनी,
अट्टाट्टहासिनी प्रेता प्रेतासननिवासिनी । ६३
नृत्तगीतप्रियाऽकामा तुष्टिदा पुष्टिदाक्षया,
निष्ठा सत्यप्रिया प्रज्ञा लोकेशी च सुरोत्तमा । ६४
सविषा ज्वालिनी ज्वाला विषमोहार्तिनाशिनी,
विषारिर्नागदमनी कुरुकुल्लाऽमृतोद्भवा । ६५

भूतभीतिहरारक्षा भूतावेशविनाशिनी,
रक्षोघ्नी राक्षसी रात्रिर्दीर्घनिद्रा दिवागतिः ।६६
चन्द्रिका चन्द्रकान्तिश्च सूर्यकान्तिर्निशाचरी,
डाकिनी शाकिनी शिष्या हाकिनी चक्रवाकिनी । ६७
सितासितप्रिया स्वङ्गा सकला वनदेवता,
गुरुरूपधरा गुर्वी मृत्युर्मारी विशारदा । ६८
महामारी विनिद्रा च तन्द्रा मृत्युविनाशनी,
चन्द्रमण्डलसंकाशा चन्द्रमण्डलवासिनी । ६९
अणिमादिगुणोपेता सुस्पृहा कामरूपिणी,
अष्टसिद्धिप्रदा प्रौढा दुष्टदानवघातिनी । ७०
अनादिनिधनापुष्टिश्चतुर्बाहुर्चतुर्मुखी,
चतुःसमुद्रशयना चतुर्वर्गफलप्रदा । ७१
काशपुष्पप्रतीकाशा शरत्कुमुदलोचना,
भूता भव्या भविष्या च शैलजा शैलवासिनी । ७२
वाममार्गरता वामा शिववामाङ्गवासिनी,
वामाचारप्रिया तुष्टा लोपामुद्रा प्रबोधिनी । ७३
भूतात्मा परमात्मा च भूतभावविभाविनी,
मङ्गला च सुशीला च परमार्थप्रबोधिका । ७४
दक्षिणा दक्षिणामूर्तिः सुदक्षिणा हरिप्रिया,
योगिनी योगयुक्ता च योगाङ्गा ध्यानशालिनी
योगपट्टधरा मुक्ता मुक्तानां परमागतिः,
नारसिंही सुजन्मा च त्रिवर्गफलदायिनी । ७६

धर्मदा धनदा चैव कामदा मोक्षदा द्युतिः,
साक्षिणी क्षणदा दक्षा दक्षजा कोटिरूपिणी । ७७
क्रतुः कात्यायनी स्वच्छा स्वच्छन्दा च कविप्रिया,
सत्यागमा बहिःस्था च काव्यशक्तिः कवित्वदा । ७८
मेनापुत्री सती माता मैनाकभगिनी तडित्,
सौदामिनी स्वधामा च सुधामा धामशालिनी । ७९
सौभाग्यदायिनीद्यौश्च सुभगा द्युतिवर्द्धिनी,
श्रीः कृत्तिवसना चैव कङ्काली कलिनाशिनी । ८०
रक्तबीजवधोद्दृप्ता सुतन्तुर्बीजसन्ततिः,
जगज्जीवा जगद्बीजा जगत्त्रयहितैषिणी । ८१
चामीकररुचिश्चान्द्रीसाक्षयाषोडशीकला,
यत्तत्पदानुबन्धा च यक्षिणी धनदार्चिता । ८२
चित्रिणी चित्रमाया च विचित्रा भुवनेश्वरी,
चामुण्डा मुण्डहस्ता च चण्डमुण्डवधोद्धुरा । ८३
अष्टम्येकादशी पूर्णा नवमी च चतुर्दशी,
अमा कलशहस्ता च पूर्णकुम्भधरा धरा । ८४
अभीरुर्भैरवी भीमा भीरा त्रिपुरभैरवी,
महारुण्डा च रौद्री च महाभैरवपूजिता । ८५
निर्मुण्डा हस्तिनी चण्डा करालदशनानना,
कराला विकराला च घोरघुर्घुरनादिनी । ८६
रक्तदन्तोर्ध्वकेशी च बन्धूककुसुमारुणा,
कादम्बरी पटासा च काश्मीरी कुङ्कुमप्रिया । ८७

क्षान्तिर्बहुसुवर्णा च रतिर्बहुसुवर्णदा,
मातङ्गिनी वरारोहा मत्तमातङ्गगामिनी । ८८
हिंसा हंसगतिर्हंसी हंसोज्ज्वलशिरोरुहा,
पूर्णचन्द्रमुखी श्यामा स्मितास्या श्यामकुण्डला । ८
मषी च लेखिनी लेख्या सुलेखा लेखकप्रिया,
शङ्खिनी शङ्खहस्ता च जलस्था जलदेवता । ९०
कुरुक्षेत्रावनिः काशी मथुरा काञ्च्यवन्तिका,
अयोध्या द्वारका माया तीर्था तीर्थकरप्रिया । ९१
त्रिपुष्कराऽप्रमेया च कोशस्था कोशवासिनी,
कौशिकी तु कुशावर्ता कौशाम्बी कोशवर्द्धिनी । ९
कोशदा पद्मकोशाक्षी कुसुमा कुसुमप्रिया,
तोतुला च तुलाकोटिः कूटस्था कोटराश्रया । ९३
स्वयम्भूश्च सुरूपा च स्वरूपा रूपवर्द्धिनी,
तेजस्विनी सुभिक्षा च बलदा बलदायिनी । ९४
महाकोशी महावर्ता बुद्धिः सदसदात्मिका,
महाग्रहहरा सौम्या विशोका शोकनाशिनी । ९५
सात्त्विकी सत्त्वसंस्था च राजसी च रजोवृता,
तामसी च तमोयुक्ता गुणत्रयविभाविनी । ९६
अव्यक्ता व्यक्तरूपा च वेदविद्या च शाम्भवी,
शंकराकल्पिनीकल्पा मनः संकल्पसन्ततिः । ९७
सर्वलोकमयीशक्तिः सर्वश्रवणगोचरा,
सर्वज्ञानवतीवाञ्छा सर्वतत्त्वानुबोधिनी । ९८

जाग्रती च सुषुप्तिश्च स्वप्नावस्था तुरीयका,
त्वरा मन्दगतिर्मन्दा मदिरामोदधारिणीं । ९९
पानभूमिः पानपात्रा पानदानकरोद्यता,
आघूर्णारुणनेत्रा च किञ्चिदव्यक्तभाषिणी । १००
आशापूरा च दीक्षा च दक्षा दीक्षितपूजिता,
नागवल्ली नागकन्या भोगिनी भोगवल्लभा । १०१
सर्वशास्त्रवतीविद्या सुस्मृतिर्धर्मवादिनी,
श्रुतिः श्रुतिधरा ज्येष्ठा श्रेष्ठा पातालवासिनी । १०२
मीमांसा तर्कविद्या च सुभक्तिर्भक्तवत्सला,
सुनाभिर्यातना जातिर्गम्भीरा भाववर्जिता । १०३
नागपाशधरामूर्तिरगाधा नागकुण्डला,
सुचक्रा चक्रमध्यस्था चक्रकोणनिवासिनी । १०४
सर्वमन्त्रमयीविद्या सर्वमन्त्राक्षरावलिः,
मधुस्रवा स्रवन्ती च भ्रामरी भ्रमरालका । १०५
मातृमण्डलमध्यस्था मातृमण्डलवासिनी,
कुमारजननी क्रूरा सुमुखी ज्वरनाशिनी । १०६
अतीता विद्यमाना च भाविनी प्रीतिमञ्जरी,
सर्वसौख्यवती युक्तिराहारपरिणामिनी । १०७
निदानं पञ्चभूतानां भवसागरतारिणी,
अक्रूरा च ग्रहवती विग्रहा ग्रहवर्जिता । १०८
रोहिणी भूमिगर्भा च कालभूः कालवर्तिनी,
कलंकरहिता नारी चतुष्षष्ट्यभिद्यावती । १०९

जीर्णा च जीर्णवस्त्रा च नूतना नववल्लभा,
अरजा च रतिः प्रीतिः रतिरागविवर्द्धिनी । ११०
पञ्चवातगतिर्भिन्ना पञ्चश्लेष्माशयाधरा,
पञ्चपित्तवतीशक्तिः पञ्चस्थानविबोधिनी । १११
उदक्या च वृषस्यन्ती बहिःप्रस्त्रविणी त्र्यहम्,
रजः शुक्रधरा शक्तिर्जरायुर्गर्भधारिणी ११२
त्रिकालज्ञा त्रिलिङ्गा च त्रिमूर्तिः त्रिपुरवासिनी,
अरागा शिवतत्त्वा च कामतत्त्वानुरागिणी । ११३
प्राच्यवाची प्रतीचीदिक् उदीचीदिक् विदिग्दिशाम्
अहंकृतिरहंकारा बलिमाया बलिप्रिया ११४
स्रुकस्रुवा सामिधेनी च सश्रद्धा श्राद्धदेवता,
माता मातामही तृप्तिः पितृमाता पितामही ११५
स्नुषा दौहित्रिणी पुत्री पौत्री नप्त्री शिशुप्रिया,
स्तनदा स्तनधारा च विश्वयोनिः स्तनन्धयी । ११६
शिशूत्सङ्गधरा दोला दोलाक्रीडाभिनन्दिनी,
उर्वशी कदली केका विशिखा शिखिनर्तिनी । ११७
खट्वाङ्गधारिणी खट्वा बाणपुङ्खानुवर्तिनी,
लक्ष्यप्राप्तिः कलाऽलक्ष्या लक्ष्या च शुभलक्षणा । ११८
वर्तिनी सुपथाचारा परिखा च खनिर्वृतिः,
प्राकारवलया वेला मर्यादा च महोदधी । ११९
पोषणीशोषणीशक्तिर्दीर्घकेशी सुलोमशा,
ललिता मांसला तन्वी वेदवेदाङ्गधारिणी । १२०

नरासृक्पानमत्ता च नरमुण्डास्थिभूषणा,
अक्षरक्रीडारतिः शारी शारिका शुकभाषिणी । १२१
शाम्बरी गारुडीविद्या वारुणी वरुणार्चिता,
वाराही मुण्डहस्ता च दंष्ट्रोद्धृतवसुन्धरा । १२२
मीनमूर्तिधरा मूर्त्ता वन्दया प्रतिमश्रया,
अमूर्त्ता निधिरूपा च सालिग्रामशिलाशुचिः । १२३
स्मृतिः संस्काररूपा च सुसंस्कारा च संस्कृतिः,
प्राकृता देशभाषा च गाथा गीतिः प्रहेलिका । १२४
इडा च पिङ्गला पिङ्गा सुषुम्णा सूर्यवाहिनी,
शशिस्त्रवा च तालुस्था काकिन्यमृतजीविनी । १२५
अणुरूपा बृहद्रूपा लघुरूपा गुरुस्थिरा,
स्थावरा जङ्गमा देवी कृतकर्मफलप्रदा । १२६
विषयाक्रान्तदेहा च निर्विशेषा जितेन्द्रिया,
विश्वरूपा चिदानन्दा परब्रह्मप्रबोधिनी । १२७
निर्विकारा च निर्वैरा विरतिः सत्यवर्धिनी,
पुरुषाज्ञा च भिन्ना च क्षान्तिः कैवल्यदायिनी । १२८
विविक्तसेविनी प्रज्ञाजनयित्री बहुश्रुतिः,
निरीहा च समस्तैका सर्वलोकैकसेविता । १२९
सेवा सेवाप्रिया सेव्या सेवाफलविवर्द्धिनी,
कलौ कल्किप्रिया काली दुष्टम्लेच्छविनाशिनी १३०
प्रत्यञ्चा च धनुर्यष्टिः खड्गधारा दुरानतिः,
अश्वप्लुतिश्च वल्गा च सृणिः सन्मत्तवारणा १३१

वीरभूः, वीरमाता च वीरसूः वीर नन्दिनी ।
जयश्रीः जय दीक्षा च जयदा जयवर्धिनी । १३२
सौभाग्यसुभगाकारा सर्वसौभाग्यवर्द्धिनी,
क्षेमङ्करी सिद्धिरूपा सत्कीर्तिः पथिदेवता । १३३
सर्वतीर्थमयीमूर्तिः सर्वदेवमयीप्रभा,
सर्वसिद्धिप्रदाशक्तिः सर्वमङ्गलमङ्गला । १३४

सर्वं मङ्गल मङ्गल्ये शिवे सर्वार्थ साधिके ।
शरण्ये त्र्यम्बके गौरि नारायणि नमोस्तुते ॥

## फल श्रुतिः

पुण्यं सहस्रनामेदमम्बाया रुद्रभाषितम्,
चतुर्वर्गप्रदं सत्यं नन्दिकेन प्रकाशितम् । १३५
नातः परतरो मन्त्रो नातः परतरः स्तवः,
नातः परतरा विद्या तीर्थं नातः परात्परम् । १३६
ते धन्याः कृतपुण्यास्ते त एव भुवि पूजिताः,
एकभावं मुदा नित्यं येर्चयन्ति महेश्वरीम् । १३७
देवतानां देवता या ब्रह्माद्यैर्या च पूजिता,
भूयात्सा वरदा लोके साधूनां विश्वमङ्गला । १३८
एतामेव पुराराध्य विद्यां त्रिपुरभैरवीम्,
त्रैलोक्यमोहनं रूपमकार्षीद्भगवद्धरिः । १३९

इति रुद्रयामले तन्त्रे नन्दिकेश्वरसंवादे
महाप्रभावो भवानीनामसहस्रस्तवराजः सम्पूर्णः ॥

## अथ इन्द्रक्षीस्तोत्रम्

ॐ अस्य श्री इन्द्रक्षीस्तोत्रमन्त्रस्य, पुरन्दर ऋषिः, अनुष्टुप् छन्दः, श्री इन्द्राक्षी भगवती देवता, भुवनेश्वरी शक्तिः, माहेश्वरी कीलकम्, गायत्री, सावित्री सरस्वती कवचम्, आत्मनो वाङ्मनः कायोपार्जित पाप निवारणार्थे सर्व कामना सिद्ध्यर्थे पाठे विनियोगः।

### अथ करन्यासः

ॐ लक्ष्म्यै अंगुष्ठाभ्यां नमः। ॐ भुवनेश्वर्यै तर्जनीभ्यां नमः। ॐ माहेश्वर्यै मध्यमाभ्यां नमः। ॐ वज्रहस्तायै अनामिकाभ्या नमः। ॐ सहस्त्र नयनायै कनिष्ठिकाभ्यां नमः। ॐ इन्द्रक्षी भगवत्यै करतलकरपृष्ठाभ्यां नमः।

### एवं षडंगन्यासः।

ॐ लक्ष्म्यै हृदयाय नमः, ॐ भुवनेश्वर्यै शिरसे स्वाहा, ॐ माहेश्वर्यै शिखायै वषट्, ॐ वज्रहस्तायै कवचाय हुँ। ॐ सहस्त्र नयनायै नेत्राभ्यां वौषट्, ॐ इन्द्राक्षीं भगवत्यै अस्त्राय फट्। ततः प्राणायामः

### अथ ध्यानम

ॐ इन्द्राक्षीं द्विभुजा देवीं पीतवस्त्र धरां शुभाम्।
वामे-हस्ते वज्रधरां सव्य-हस्तेऽभय प्रदाम्॥
सहस्त्र नेत्रां सूर्याभां नानालंकार भूषिताम्।
प्रसन्नवदनां नित्याम् अप्सरो गण सेविताम्॥

श्री दुर्गा सौम्य वदनां पाशां कुशधरां पराम्,
त्रैलोक्य मोहिनीं देवीं भवानीं प्रणमाम्यहम् ॥
(गायत्री) ॐ शचीपतये विद्महे, पाकाशासानाय धी महि, तन्नो इन्द्रः प्रचोदयात् ॥ ३
मूल मन्त्र : ॐ ह्रीं श्रीं इन्द्राक्षी श्री पैं स्वाहा ॥

इन्द्र उवाच

इन्द्राक्षी नाम सा देवी देवतैः समुदाहृता,
गौरी शाकंभरी देवी दुर्गा नाम्नीति विश्रुता । १
कात्यानी महादेवी चन्द्रघण्टा महातपा,
गायत्री सा च सावित्री ब्रह्माणी ब्रह्मविदिनी । २
नारायणी भद्रकाली रुद्राणी कृष्णापिंगला,
अग्निज्वाला रौद्र मुखी कालरात्रिः तपस्विनी । ३
मेघश्यामा सहस्राक्षी विष्णु माया जलोदरी,
महोदरी मुक्तकेशी घोर रूपा महाबला । ४
आनन्दा भद्रजानन्दा रोगहन्त्री शिवप्रिया,
शिवदूती कराली च प्रत्यक्षा परमेश्वरी । ५
इन्द्राणी चन्द्ररूपा च इन्द्र शक्ति परायणा,
महिषा सुर संहर्त्री चामुण्डा गर्भ देवता । ६
वाराही नारसिंही च भीमा भैरव नादिनी,
श्रुतिः स्मृति-धृति-मेधा विद्या लक्ष्मीः सरस्वती । ७
अनन्ता विजया पूर्णा मनस्तोषाऽपराजिता ।
भवानी पार्वती दुर्गा हैमवत्यम्बिका शिवा । ८

शिवा भवानी रुद्राणी शंकरार्ध शरीरिणी।
एतै-र्नामपदै-र्दिव्यैः स्तुता शक्रेण धीमता।९
आयुर् आरोग्यम् ऐश्वर्यसुख सम्पति कारकम्।
क्षया पस्मार कुष्ठादि ताप ज्वर निवारकम्।१०
शतम् आवर्त्येऽयस्तु मुच्यते व्याधि बन्धनात्।
आवर्त्येत् सहस्रेण लभते वांछितं फलम्।११
राजा वश्यम् वाप्नोति सत्यम् एव न संशयः।
लक्षमे कंजपेद्यस्तु साक्षात् देवी स पश्यति।१२
त्रिकालं पठते नित्यं धनधान्य प्रिवर्थनम्।
अर्धरात्रेपठेत् नित्यं मूच्यते कर्मबन्धनात्।१३
ऐन्द्र स्तोत्रम् इदं पुण्यं जपेतु फलवर्धनम्।
विनाशाय तु रोगाणामपमृत्यु हरत्युत।१४
राज्यार्थी लभते राज्यं धनार्थी विपुलं धनम्।
इच्छाकामं तु कामार्थी धर्मार्थी धर्मम-व्ययम्।१५
विद्यार्थी लभते विद्यां मोक्षार्थी परमं पदम्।
इन्द्रेण कथितं स्तोत्रं सत्यमेव न संशयः।१६

।इति श्री इन्द्राक्षीस्तोत्रं सम्पूर्णम्॥

माया कुण्डलिनी, क्रिया मधुमती, काली कला मालिनी, मातंगी विजया जया भगवती देवी शिवा शाम्भवी। शक्ति शंकर वल्लभा त्रिनयना त्रिनयना वाक वादिनी भैरवी ह्रींकारी त्रिपुरा

परापरमयी माता-कुमारी त्वयसि ।

अनेन मन्त्रपाठेन आत्मनो वांगमनः कायोपार्जित पाप निवारणार्थं श्री इष्ट दैवी प्रीत्यर्थं भगवती आमा कामा चार्वंगी टंक-धारिणी तारा पार्वती यक्षिणी श्री शारिका भगवती श्री शारदा भगवती श्री महाराज्ञी भगवती श्री ज्वाला भगवती व्रीडा भगवती वैखरी-भगवती वितस्ता भगवती गंगा भगवती यमुना भगवती कालिका भगवती सिद्ध लक्ष्मीः महालक्ष्मीः महात्रिपुर सुन्दरी सहस्रनाम्नी देवी भवानी सपरि-वारा सवाहना सायुधा सांगा प्रीयतां प्रीतास्तु ।

इति इन्द्रक्षी स्तोत्रं सम्पूर्णम् ।

असतो मा सद्गमय,

तमसो मा ज्योतिर्गमय,

मृत्योर्माऽमृतं गमय ।

ॐ शान्तिः शान्तिः शान्तिः ।

## अथ शारिकास्तुतिः

सप्तसप्तिद्युति
बीजैः सप्तभिरुज्ज्वला कृतिरसौ या सप्तलोकार्तिहृत्।
सप्तर्षिप्रणताङ्घ्रिपङ्कजयुगा या सप्तलोकार्तिहृत्।
काश्मीर प्रवरेश्मध्यनगरे प्रद्युम्नपीठे स्थिता
देवी सप्तक संयुता भगवती श्री शारिका पातुनः।

जय भगवति विन्ध्यवासिनि कैलासवासिनि
श्मशानवासिनि हुङ्कारिणि कालायनि
कात्यानि हिमगिरितनये कुमारमातः गोविन्द
भगिनि शितिकण्ठाभरणे अष्टादशभुजे
भुजङ्गवलयमण्डिते केयूरहाराभरणे अजेय
खड्गत्रिशूल डमरू मुद्गरचषककल शर चापवरा
अभय पाश पुस्तक कपाल खटवाङ्ग गदा
मुसुल तोमर चक्रहस्ते कृपापरे प्रभूतवविधयुधे
चण्डिके चण्डघण्टे किरातवेशे
ब्रह्माणि रुद्राणि नारायणि ब्रह्मचारिणि
दिव्यनपोविद्यायिनि वेदमातः गायत्रि
सावित्रि सरस्वति सर्वाधारे सर्वेश्वरि
विश्वेश्वरि विश्वकर्त्रि समाधिविश्रान्तिमये
चिन्मये चिन्तामणिस्वरूपे कैवल्ये शिवे
निराश्रये निरूपाधिमये निरामयपदे ब्रह्मविष्णु-
महेश्वरनमिते मोहिनि तोषिणि भयंकरनाशिनि

दितिसुतप्रमथिनि काले कालकिंकरमथिनि
कालाग्निशिखे कालरात्रि अजे नित्ये सिरंते
योगरते योगेश्वरनमिते भक्तजनवत्सले सुरप्रिय
कारिणि दुर्गे दुर्जय हिरण्ये शरण्ये कुरूमां दयाम्।



कर्पूरगौरं करुणावतारं संसारसारं भुजगेन्द्रहारम्।
सदा वसन्तं हृदयार बिन्दे भवं भवानी सहितं नमामि

त्वमेव माता च पिता त्वमेव,
त्वमेव बन्धुश्च सखा त्वमेव

त्वमेव विद्या द्रविणं त्वमेव,
त्वमेव सर्वं मम देव देव ॥

करचरणकृतं वाक्कायजं कर्मजं वा
श्रवणनयनजं वा मानसं वाऽपराधम्।
विदितमविदितं वा सर्वमेतत्क्षमस्व
जय जय करुणाब्धे श्री महादेव शम्भो ।
नन्दन्तु साधकाः सर्वे विनश्यन्तु विदूषकाः
अवस्था शाम्भवी मेऽस्तु प्रसन्नोस्तु गुरुः सदा।
सर्वे भवन्तु सुखिनः सर्वे सन्तु निरामया
सर्वे भद्राणि पश्यन्तु मा कश्चिद् दुःखभाग्भवेत।

मन्त्रहीनं क्रियाहीनं विधिहीनं च यद्गतम्
त्वया तत्क्षम्यतां देव ! कृपया परमेश्वरः ।

राज-स्वस्ति प्रजा स्वस्ति देशस्वस्ति तथैव च
यजमान गृहे स्वस्ति स्वस्ति गोब्रह्मणेशु च ।

सहनावक्तु, सह नौ भुनक्तु, सहवीर्यं कुर्वावहैः
तेजस्विनावधीतमस्तु, मा विद्विषावहैः ।



ओम् पूर्णमदः पूर्णमिदं पूर्णात्पूर्ण मुदच्यते
पूर्णस्य पूर्णमादाय पूर्ण मेवा वशिष्यते ।

ओम् शान्तिः ! शान्तिः ! शान्तिः ! ओम्



## भजन

अब सौंप दिया इस जीवन का,
सब भार तुम्हारे हाथों में।

हैं जीत तुम्हारे हाथों में,
और हार तुम्हारे हाथों में।

मेरा निश्चय बस एक यही,
एक बार तुम्हें पा जाऊं मैं।

अर्पण कर दूं दुनिया भर का,
सब प्यार तुम्हारे हाथों में।

यदि जग में रहूं तो ऐसे रहूं,
जैसे जल में कमल का फूल रहे।

मम अवगुण दोष समर्पित हों,
भगवान तुम्हारे हाथों में।

यदि मानुष का मुझे जन्म मिले,
तब चरणों का मैं पुजारी बनूं।

इस भक्त की तन मन का,
रहे तार तुम्हारे हाथों में।

जब जब संसार का कैदी बनूं,
निष्काम भाव से काम करूं।

फिर अंत समय में प्राण तजूं,
निराकार तुम्हारे हाथों में।
मुझ में तुझ मे बस भेद यही,
मैं नर हूं आप नारायण हैं।
मैं हूं संसार के हाथों में।
संसार तुम्हारें हाथों में।



## प्रार्थना

ॐ कार प्रभु तेरा नाम,
गुण गावे संसार तमाम।
प्राण स्वरूप प्राणों से प्यारा,
दूर दुखूं के करने हारा।
सुख स्वरूप सुखों के दाता,
अन्त न कोई तुम्हारा पाता।
सारे जग को पैदा करता,
सब से उत्तम पाप का हरता।
हे ईश्वर हम तुझे ध्यायें,
पाप कर्म के पास न जाएं।
बुद्धि करो हमारी उज्ञवल,
जीवन होवे हमारा निर्मल।
ॐकार प्रभु तेरा नाम॥

## आरती गणेश जी की

जय गणेश जय गणेश जय गणेश देवा ।
माता जाकी पार्वती पिता महादेवा ॥
एक दन्त दयावन्त चार भुजा धारी ।
मस्तक सिन्दूर सोहे मूसे की सवारी ।२।
अन्धन को आंख देत कोढ़िन को काया
बांझन को पुत्र देत निर्धन को माया । ३ ।
हार चढ़े फूल चढ़े और चढ़े मेवा । ४ ।
लड्डुवन का भोग लागे सन्त करें सेवा ।
दीनन् की लाज राखो शम्भु सुत वारी ।
कामन को पूरा करो जाऊं बलिहारी । ५ ।

—●—

# शिवजी की आरती

ओम जय शिव ओंकारा, स्वामी जय शिव ओंकारा।
ब्रह्मा, विष्णु, सदाशिव, अर्धाङ्गी धौरा॥
ॐ जय हर हर महादेव !

एकानन चतुरानन पंचानन राजे।
हंसासन गरुडासन वृषभवाहन साजे॥

दो भुज चार चतुर्भुज दशभुज ते सोहे।
तीनों रूप निरन्तर त्रिभुवन मन मोहे॥

अक्षमाला वनमाला मुण्डमाला धारी।
त्रिपुरारी कंसारी कर माला धारी॥

श्वेताम्बर, पीताम्बर, बसमांबर, अंगे।
सनकादिक, ब्रह्मादिक, प्रेतादिक संगे॥

करमध्ये करमण्डल, चक्र त्रिशूल धर्त्ता।
दुःख हर्ता, सुख कर्त्ता जग पालन कर्त्ता॥

ब्रह्मा, विष्णु, सदाशिव जानत अविवेका।
प्रणवाक्षर के मध्ये यह तीनों ही एका॥

त्रिगुण शिव जी की आरती जो कोई नित गावे।
कहत शिवानन्द स्वामी मन वांछित फल पावे॥



## भजन जय संतोषी मां

मैं तो आरती उतारूं रे संतोषी माता की,
जय जय संतोषी माता जय जय मां ।

बड़ी ममता है बड़ा प्यार मां की आंखों में,
बड़ी करुणा माया दुलार मां की आखों में ।
क्यूं न देखूं बारम्बार मां की आंखों में,
दिखे हर घड़ी नया चमत्कार मां की आंखों में ।
नृत्य करूं छुम छुम झम झमा झम झुम झुम,
झांकी निहारूं रे ओ प्यारी २ झांकी निहारूं रे ।
मैं तो आरती उतारूं रे संतोषी माता की,
जय जय संतोषी माता जय जय मां ।
सदा होती है जय जय कार मां के मन्दिर में,
नित झांझर की हो झन्कार मां के मन्दिर में ।
सदा मंझीरे करते पुकार मां के मन्दिर में,
दिखे हर घड़ी नया चमत्कार मां के मन्दिर में ।
दीप धरूं धूप धरूं प्रेम सहित भक्ति करूं,
जीवन सुधारूं रे ओ प्यारा २ जीवन सुधारूं रे ।
मैं तो आरती उतारूं रे संतोषी माता की ॥





## कुछ स्मृणीय श्लोक !

ओं नमः शिवाय गुरवे सच्चिदानन्द मूर्तये,
निष्प्रपंचाय शान्ताय निरालम्बाय तेजसे ।

लीलया लोकरक्षार्थं द्विधा भूतो महेश्वरः,
यः स्वयं जगतां साक्षी तं वन्दे द्विरदाननम् ।

नारायणं नमस्कृत्य नरं चैव नरोत्तमं,
देवी सरस्वती व्यासं ततो जयमुदीरयेत् ।

नमामि नारायण पादपंकजं,
वदामि नारायण नामनिर्मलम् ।
स्मरामि नारायण तत्त्वमव्ययं,
करोमि नारायण पूजनं सदा ।

करारविन्देन पदारविन्दं मुखारविन्दे विनिवेशयन्तं,
अश्वत्थपत्रस्य पुटे शयानं बालं मुकुन्दं मनसा स्मरामि ।

गोपाल बालं भुवनैकपालं संसारमायामतिमोहजालं,
यशोविशालं शिशुपालकालं बालं मुकन्दं मनसा स्मरामि ।

कृष्णस्त्वदीय पदपंकज पंजरान्ते,
अद्यैव मे विशतु मानसराजहंसः ।

प्राण: प्रयाणसमये कफवातपित्तै-
र्कण्ठावरोधनविधौ स्मरणं कुतस्ते।

( ध्यान करना )

शान्ताकारं भुजगशयनं पद्मनाभं सुरेशं,
विश्वाधारं गगनसदृशं मेघवर्ण शुभांगम्।

लक्ष्मीकान्तं कमलनयनं योगिभिर्ध्यानगम्यं,
वन्दे विष्णुं भवभय हरं सर्वलोकैकनाथम्।

यं ब्रह्मावरुणेन्द्रमरुतः स्तुन्वन्ति दिव्यैः स्तवै-
र्वेदैः सांगपदक्रमोपनिषदैर्गायन्ति यं सामगाः।

ध्यानावस्थिततद्गतेन मनसा पश्यन्ति यं योगिनो
यस्यान्तं न विदुः सुरासुरगणा देवाय तस्मै नमः।

गीता सुगीता कर्तव्या किमन्यैः शास्त्रविस्तरैः
या स्वयं पद्मनाभस्य मुखपद्माद्विनिःसृतः।

—●—

श्री कृष्णप्रीत्यर्थे पाठे विनियोगः

ॐ पार्थाय प्रतिबोधितां भगवता नारायणेन स्वयं
व्यासेन ग्रथितां पुराणमुनिना मध्येमहाभारतम् ।
अद्वैतामृतवर्षिणीं भगवतीमष्ठादशाध्यायिनी-
मम्बत्वामनुसंदधामि । भगवद्गीते भवद्वेषिणीम् ।. १

नमोऽस्तु ते व्यास विशालबुद्धे
फुल्लारविन्दायतपत्रनेत्र
येन त्वया भारततैलपूर्णः
प्रज्वालितो ज्ञानमयः प्रदीपः । २

प्रपन्नपारिजाताय तोत्रवेत्रैकपाणये ।
ज्ञानमुद्राय कृष्णाय गीतामृतदुहे नमः । ३

वसुदेवसुतं देवं कंसचाणूरमर्दनम् ।
देवकीपरमानन्दं कृष्णं वन्दे जगद्गुरुम् । ४

भीष्मद्रोणतटा जयद्रथजला गान्धारनीलोत्पला
शल्यग्राहवती कृपेण वहनी कर्णेन वेलाकुला ।
अश्वत्थामविकर्णघोरमकरा दुर्योधनावर्तिनी
सोत्तीर्णा खलुपाण्डवै रणनदीकैवर्तकः केशवः । ५

पाराशर्यवचः सरोजममलं गीतार्थगन्धोत्कटं
नानाख्यानककेसरं हरिकथासम्बोधनाबोधितम् ।

लोके सज्जनषट्पदैरहरहः पेपीयमानं मुदा
भूयाद्भारतपङ्कजं कलिमलप्रध्वंसि नः श्रेयसे ६

मूकं करोति वाचालं पङ्गुं लङ्घयते गिरिम्।
यत्कृपा तमहं वन्दे परमानन्दमाधवम्। ७

० श्रीमद्भगवद्गीता व्याख्यान् ०

उल्लंघ्य सिन्धोः सलिलं सलीलं
यः शोकवह्निं जनकात्मजायाः,
आदाय तेनैव ददाह लंकां
नमामि तं प्रांजलिरांजनेयम्।

असतो मा सद्गमय। तमसो मा ज्योतिर्गमय।
मृत्योर्माऽमृतं गमय।

सह नाववतु, सह नौ भुनक्तु, सह वीर्यं करवावहै।
तेजस्विनावधीतमस्तु। मा विद्विषावहै।

ॐ शान्तिः शान्तिः शान्तिः



यत्र यत्र रघुनाथ कीर्तनं
तत्र तत्र कृतमस्त कांजलिम् ।
वाष्प वारि परि पुर्णलोचनं
मारुतिं नमत राक्षसान्तकम् ॥ १

रामनाम जपतां कुतो भयं सर्वतापशम नैक भेषजम,
पश्य तात मम गात्रसन्निधौ पावकोऽपि सलिलायते ऽधुना । २

करोतु सा नः शुभहेतुरी श्वरी
शुभानि भद्राण्य-भिहन्तुचापदः । ३

यावन्नैव प्रविशति चरन्मारुतो मध्यमार्गे
यावद्विन्दर्न भवति दृढं प्राणवात प्रबन्धात् ।

यावन्नैव सहजसदृशं जायते तत्त्वम्
तावत्सर्वं तदिदमखिलं दम्भमिथ्याप्रलपम् ॥ ४

वक्त्रं यदुधतमऽभिष्ठुतये भवतणा-
स्तुभ्यं नमो यदपि देवि ! शिरः करोति ।

चेतश्च यत्नीय परायणमम्ब ! तानि
कस्यापि कैरपि भवन्ति तपोविशेषैः ॥ ५

संसार सागर समुन्तरणैक मन्त्रं
ब्रह्मादि-योगि-मुनि-पुजितसिद्धि-मन्त्रम ।

दारिद्रय-दुःख-भय-रोग विनाश मन्त्रं
वन्दे महाभयहरं गुरुराज मन्त्रमः ॥ ६
आराधयामि गणिशन्निभमात्य-लिङ्ग
मायापुरी हृदय पङ्कज सन्निविष्टम ।
श्रद्धा नदी विमल-चित्ते जलाभिषेक-
र्नित्यं समाधिकुसुमैर्न-पुनर्भवाय ॥ ७



ॐ श्री गणेशाय नमः

ॐ नमः त्रिपुरसुन्दर्यै

गुरुशक्तिः जयत्येका मत् रूप प्रविकासिका,
स्वरूप गोपन व्यग्रा शिव शक्तिः जिता यया । १
माता भवानी च पिता भवानी
बन्धुर्भवानी च गुरुर्भवानी ।
विद्या भवानी द्रविणं भवानी
यतो यतो यामि ततो भवानी ॥ २
दुर्गे स्मृता हरसि भीतिमशेषजन्तोः
स्वस्थैः स्मृता मतिमतीव शुभां ददासि,
दारिद्रयदुःखभयहारिणि कात्वदन्या
सर्वोपकार करणाय दयार्द्रचित्ता । ३

भक्तानु-ग्रहकारिणी भगवती देवाधि-देवीश्वरी
दीनानाथ-कृपावती स्वजननी भक्तानु रक्ता सती
ॐ काराक्षर वासिनी सुरनुता सर्वेश्वरी सर्वदा
भूयात नो वरदा सदाऽहाभयदा कामेश्वरी कामदा । ४

—●—

ॐ परमात्मने श्री शिवाय नमः

ईश्वरो गुरुरात्मेति मूर्तिभेदविभागिने ।
व्योम्वत् व्याप्तदेहाय दक्षिणामूर्तये नमः ॥
लीलया लोकरक्षार्थं द्विधाभूतो महेश्वरः ।
यः स्वयं जगतां साक्षी तं वन्दे द्विरदाननम् ॥
ब्रह्मेन्द्ररुद्रहरिचन्द्रसहस्ररश्मि
स्कन्दद्विपाननहुताशन वन्दितायै ।
वागीश्वरि ! त्रिभुवनेश्वरि ! विश्वमात-
रन्तर्बहिश्च कृतसंस्थितये नमस्ते ॥
मूढाऽस्मि दुःखकलितोऽस्मि जरादि दोषै
र्भीतोऽस्मि शक्तिरहितोऽस्मि तवाश्रितोऽस्मि ।
-भो ! तथा कलय शीघ्रमुपैमि येन
र्त्तमां पदमुपोज्जित दुःखमार्गः ॥

"मूढ छुस त दुखव्य सतिन भरिथ छुस
बुजरकि दूष सत्य खोफजद छुस
सामर्थ रोस छुस निर्बल त कीवल
आसरस चानिस थफ करिथ छुस ।
ही शम्भु बनाव म्य जल त्युथ युथ प्रावै
सारिवय खोत परम उतम थान
त्राविथ छ. न ब दुःख मारग सारिय
रोज. हा ब चानि समाधियि लोर ॥"

यस्मिन्सर्वं यतः सर्वं
यः सर्वं सर्वतश्च यः ।
यश्च सर्वमयो नित्यं
तस्मै सर्वात्मने नमः ॥

—●—

'शुभ समाप्तम्'

ॐ शान्तिः शान्तिः शान्तिः

जागृत

उतिष्ठ ॐ प्राप्य

वरान्–निबोधत्

## बधाई ! शिवरात्री के महान पर्व पर 2008

# महामाया माता उमा देवी मन्दिर

## लोवर रूप नगर, मुट्ठी–II, जम्मू।

## मूलमन्त्र

सर्वाननशिरोग्रीवः, सर्वभूतगुहाशयः।
सर्वव्यापी स भगवान्, तस्मात्सर्वगतः शिवः।।
महान प्रभुर्वै पुरूषः सत्त्वस्यैष प्रवर्तकः।
सुनिर्मलामिमों प्रप्तिमीशानो ज्योतिरव्ययः।।
(श्वेता० ३/११-१२)

अर्थ : जिनके आनन, सिर और ग्रीवा सर्वतोमुख हैं। जो सम्पूर्ण जीवों के हृदय में विराजमान हैं। जो सर्वव्यापी और सब के अन्दर रमे हुए हैं। वे ही सर्वऐश्वर्यसम्पन्न शिव हैं। वे पुरूष एवं महान प्रभु हैं और सब के अस्तित्व के आधार हैं। वे अविनाशी ज्योतिस्वस्वरूप हैं और प्रत्येक पदार्थ में अपनी ही कृपा से प्राप्नीय हैं।

One, whose face, head and neck is facing all sides, who resides in the heart of all living beings, who covers every thing and merrily stays in everybody, He is Shiva all blissful, omnipotent, greatest master, dependable for all, undestructable and glittering light like, **HE** is achievable in everything through **HIS** grace alone.

**CHAIRPERSON**
Swami Svayamananda Ashram

# शान्तिपाठ

ॐ शं नो मित्रः । शं वरुणः । शं नो भवत्वर्यमा । शं नो इन्द्रो बृहस्पतिः । शं नो विष्णुरुरुक्रमः । नमो ब्रह्मणे । नमस्ते वायो । त्वमेव प्रत्यक्षं ब्रह्मासि । त्वामेव प्रत्यक्षं ब्रह्म वदिष्यामि । ऋतं वदिष्यामि । सत्यं वदिष्यामि ।

तन्मामावेत्, तद्वक्तारमावेत्, आवेत् माम्, आवेत् वक्तारम् ।

ॐ शान्तिः शान्तिः शान्तिः ।

( ऋग्वेद का मन्त्र )